अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७८.

# आश्वलायनगृह्यसूत्रं

श्रीहरदत्ताचार्यमिश्रविरचितया अनाविलाख्यया
वृत्त्या समेतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
लण्डनपुरस्थराजकीयैष्याखण्डीयविद्यासेवकसमाजपूज्यसभ्यपदभाजा
महामहोपाध्यायेन
त. गणपतिशास्त्रिणा
संशोधितम् ।

तच्च
अनन्तशयने
महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितम् ।

कोल्लमाब्दाः १०९८, क्रैस्ताब्दाः १९२३.

# PREFACE.

The Āsvalāyanagrihya with the Vritti Anāvilā of Haradattāchārya Misra is now given to the public.

The edition of the work is based on the following five palm-leaf manuscripts which are almost free from errors.

(क) *The text with a portion of the Anāvilā running up to the third Khanda in the second Adhyāya belonging to Mr. Subrahmanyan Numburipad,* Kaduthuruthi, Vaikom.

(ख) *Do. with the Anāvilā belonging to Mr. Narayanan* Bhattathiri, Mulamana Illam, Thukalasseri, Thiruvella.

(ग) Do. Do. belonging to Mr Sankara Bhattathiri, *Kuzhikkattu Illam, Thukalasseri, Thiruvella.*

(घ) Do. Do belonging to Mr. Yajnasubrahmanya *Srauti, Trivandrum.*

(ङ) Do. Do. belonging to Mr. Thuppan Haridasan *Numburipad, Ponnorkottu Mana, Netunthuruthi.*

All these manuscripts are in Malayalam characters except the one marked घ which is in Tamil grantha.

This Vritti differs in many places from that of Gārgya Nārāyaṇa published in the Bibliotheca Indica many years ago, in respect of the reading of the Sūtras, the division of *the Sūtras and Khandas as well as the interpretation. From* the simple and dignified nature of elucidation, the present *Vritti looks almost like a Bhāshya; and Gārgya Nārāyana* who has not followed this Vritti or made any mention of it in his commentary appears not to have seen it at all. The terse and beautiful style characteristic of Haradatta as found in his works viz., Padamanjarī a commentary on the Kāsikā Vritti, Mitākshara a Vritti on the Gautama Dharma Sūtra, and Srutisūktimālā, is also observable throughout the Anāvilā; and from this it seems *likely that Haradatta, the author* of the Anāvila, is no other person than the author of the *Padamanjarī and other works.*

Haradatta is quoted in the Purushakāra (Trivandrum Sanskrit Series *No. 1) which is again referred to in the* Dhātuvritti of Mādhavāchārya. Since the date of Purushakara, as stated in our introduction to the work, is assigned to the 13th century A. D., Haradatta quoted in it should be earlier than that date. Saraṇadeva the author of the

*Durghatavritti* (*Trivandrum Sanskrit Series No. 6*) cites Jainendra and Kaiyata as authority but does not mention Haradatta or his Padamanjarī. If Saranadeva had known of the Padamanjarī which is in some respects as important a work in the grammatical literature as the Mahābhāshya he would not have omitted to mention it in his Durgatavritti; and from this it appears that Haradatta flourished later than Saranadeva. Saranadeva wrote his work, as he himself tells us in his work, in Saka 1095 corresponding to 1172 A. D. If Haradatta is posterior to Saranadeva, then his date falls at the close of the 12th century A. D.

Trivandrum,
27th July 1923.

T. GAṆAPATI SĀSTRI.

# निवेदना ।

गृह्यमिदम् आश्वलायनीयम् अनाविलासमाख्यया हरदत्ताचार्यमिश्रप्रणीतया वृत्त्या समेतं प्रकाश्यते ।

अस्य संशोधनाधारभूता आदर्शास्तावदेते—

क. आश्वलायनगृह्यम् (अनाविलोपेतं द्वितीयाध्यायतृतीयखण्डैकदेशान्तं श्रीयुतसुब्रह्मण्यनम्बूरिस्वामिकम्).

ख. तथा (श्रीयुतनारायणभट्टतिरिसम्बन्धि).

ग. तथा (श्रीयुतशङ्करभट्टतिरिसम्बन्धि).

घ. तथा (श्रीयुतयज्ञसुब्रह्मण्यश्रौतिसम्बन्धि).

ङ. तथा (श्रीयुत(तुप्पन्)हरिदासनम्बूरिसम्बन्धि).

एषु घ-संज्ञो द्रमिलग्रन्थलिपिः, अन्ये केरलीयलिपयः । सर्वे एते तालपत्रात्मकाः शुद्धप्रायाः ।

वर्षपूगात् प्राक् कलिकातासंस्कृतग्रन्थावलौ प्रकाशिताया गार्ग्यनारायणविरचिताया वृत्तेः सकाशादियं वृत्तिः सूत्रविभागतः खण्डविभागतोऽर्थवर्णनतश्च बहुत्र भिद्यते । एनां वृत्तिमननुसरता चास्मरता च गार्ग्यनारायणेन न परिशीलितैषा नूनम् । विवरणवाक्यगुणसम्पद्योगेन पुनरियं भाष्यग्रन्थवदवभासते । या सा हरदत्तप्रणीता काशिकावृत्तेर्व्याख्या पदमञ्जरी या गौतमधर्मसूत्रवृत्तिर्मिताक्षरा या च श्रुतिसूक्तिमाला, तासु परिदृश्यमानं तत्त्वस्वभावसुलभं किमपि विलक्षणं प्रौढत्वम् अनाविलायामुपलभ्यते । येन अनाविलाकारोऽयं हरदत्ताचार्यमिश्रः पदमञ्जरीकारान्न भिद्यत इति शक्यं कल्पयितुम् ।

हरदत्ताचार्यस्तु माधवाचार्यस्य धातुवृत्तौ प्रमाणितैः पुरुषकारे (Trivandrum Sanskrit Series No 1) स्मर्यते । पुरुषकारकर्ता च कृष्णलीलाशुकमुनिः क्रैस्ताब्दीयत्रयोदशशतकवर्तीति पुरुषकारोपोद्घातेऽवोचाम । अतो हरदत्ताचार्यस्त्रयोदशशताब्दीप्राक्तनो वक्तव्यः । किञ्च दुर्घटवृत्तौ (Trivandrum Sanskrit Series No 6) जैनेन्द्रकैयटादिषु

स्मर्यमाणेषु हरदत्तः पदमञ्जरी वा न क्वापि स्मर्यते। यदि त वा तत्कृतिं पदमञ्जरीं वा महाभाष्यतुल्यमहिमानं दुर्घटवृत्तिकारः शरणदेवो व्यज्ञास्यदवश्यमस्मरिष्यत्। तेन शरणदेवादर्वाचीनो हरदत्त इत्यपि शक्यमूहितुम्। शरणदेवश्च ११७२ तमक्रैस्ताब्दतुल्ये १०९५ तमे शाकमहीपतिवत्सरे स्थितः। ततश्च शरणदेवापेक्षयार्वाचीनो हरदत्तः क्रैस्ताब्दीयद्वादशशतकशेषे निवेशनमर्हति।

अनन्तशयनम्,
११-१२-१९१८

त. गणपतिशास्त्री.

## विषयानुक्रमणी ।

### प्रथमोऽध्यायः ।

१—२१. खण्डाः । स्थालीपाकाद्युपाकर्मान्तानि कर्माणि ।

### प्रथमः खण्डः ।



### द्वितीयः खण्डः ।



### तृतीयः खण्डः ।

सूत्रम्. विषयः.



चतुर्थः खण्डः ।




सूत्रम्. विषयः.

२९. गान्धर्वविवाहः ।
३०. आसुरविवाहः ।
३१. पैशाचविवाहः ।
३२. राक्षसविवाहः ।

---

पञ्चमः खण्डः ।

१. विवाहे नानाविधजनपदादिधर्माणां ज्ञात्वानुष्ठानम् ।
२. समानधर्मप्रतिज्ञा ।
३. पाणिग्रहणविधिः, कामनाभेदेन पाणिग्रहणप्रकारः ।
४. अग्न्युदकुम्भयोस्त्रिः परिणयनं जपश्च ।
५. परिणयनमन्त्रः ।
६. अश्मारोहणम् ।
७. अश्मारोहणमन्त्रः ।
८. वध्वा अञ्जलावुपस्तीर्य द्विर्लाजावापः ।
९. जमदग्नीनां त्रिरवदानम् ।
१०. अवत्तस्य हविःशेषस्य च प्रत्यभिघारणम् ।
११. सर्वत्रावदानेपूपस्तरणमवदानं प्रत्यभिघारणं चेत्यवदानधर्मः ।
१२. लाजहोमप्रकारस्तन्मन्त्राश्च ।
१३. शूर्पपुटेन तूष्णीं चतुर्थहोमप्रकारः ।
१४. केषाञ्चिन्मते लाजहोमात् परं परिणयनम् ।
१५. अस्मिन् पक्षे उत्तमाहुत्योरसन्निपातः ।
१६. समनन्तरमेव वध्वाः शिखयोर्विमोकः ।
१७. ऊर्णासूत्राभ्यां केशपक्षयोर्बन्धनम् ।
१८. दक्षिणपक्षसूत्रस्य 'प्रत्वा मुञ्चामी'ति मन्त्रेण विमोकः ।
१९. उत्तरपक्षसूत्रस्य 'प्रेतो मुञ्चामी'ति मन्त्रेण विमोकः ।
२०. सप्तपदी ।
२१. दम्पत्योः शिरस्युदकुम्भेनावसेकः । गृहान्तरगमने नियमविशेषः ।

सूत्रम्. विषयः.

७. उक्तद्रव्यालाभे द्रव्यान्तरपरिग्रहणम् ।

८. सायम्प्रातर्होमः ।

---

अष्टमः खण्डः ।

१. पार्वणः स्थालीपाकः ।

२. दर्शपूर्णमासयोः पूर्वस्यां रात्रावुपवासनियमः ।

३. इध्माबर्हिषोः सन्नहनम् ।

४. देवताः ।

५. काम्यदेवताः ।

६. देवताभ्यः प्रत्येकं चतुर्मुष्टिनिर्वापः ।

७. निर्वापप्रकारस्तन्मन्त्रश्च ।

८. निर्वापक्रमेण प्रोक्षणम् ।

९. त्रिरवहननफलीकरणप्रक्षालनपूर्वं पृथक्पात्रेषु श्रपणम् ।

१०. एकस्मिन् पात्रे वा श्रपणम् ।

११. पृथक्श्रपणे प्रकारकथनम् ।

१२. एकत्र श्रपणे प्रकारकथनम् ।

१३. शृतस्य हविष उदगुद्वासनं परिध्याघारानूयाजसमिधां परिधानम् इध्महोमस्तन्मन्त्रश्च ।

१४. तूष्णीमाघारहोमानन्तरमाग्नेयसौम्ययोराज्यभागयोर्होमविधिः ।

१५. पूर्वोक्ताज्यभागयोर्देशविधिः ।

१६. आज्यभागयोर्यज्ञचक्षुरूपणम्, आज्यभागयोः प्रथममुत्तरतः पश्चाद् दक्षिणतश्च होमे उपपत्तिकथनम् ।

१७. आज्यभागयोर्मध्ये प्रधानाहुतिहोमः ।

१८. प्रत्यक्तरं वा प्रधानाहुतिहोमः ।

१९. प्राक्संस्थमुदक्संस्थं वा हविर्होमः ।

२०. अग्नेरुत्तरपूर्वभागे स्विष्टकृतहोमः ।

२१. चतुरवत्तिनामवदानक्रमः ।

२२. पञ्चावत्तिना जमदग्नीनामवदानक्रमः ।

सूत्रम्· विषयः·

२३. हविष उत्तरार्धात् सौविष्टकृतमेकमवदानं, पञ्चावत्तिनो द्विरवदानं, सर्वेषां द्विरभिघारणम् इत्यवदानसम्पत्तिः ।
२४. प्रधानावदान इव सौविष्टकृतेऽवदाने हविषां न प्रत्यभिघारणम् ।
२५. सौविष्टकृतस्य हविषो होमे मन्त्रोपदेशः ।
२६. स्तीर्णे बर्हिषि प्रणीतापात्रनिनयनम् ।
२७. पाकयज्ञेषु पूर्णपात्रनिनयनस्यावभृथत्वरूपणम् ।
२८. उपदिष्टस्याङ्गजातस्य सर्वपाकयज्ञतन्त्रत्वम् ।
२९. हविश्शेषस्य दक्षिणात्वम् ।

---

नवमः खण्डः ।

१. पशुकल्पाधिकारः ।
२. शामित्रस्याग्नेरुत्तरतः संस्कृत्य प्रत्यङ्मुखमवस्थापितस्य पशोः समन्त्रकमार्द्रपलाशशाखया पश्चादुपस्पर्शः ।
३. व्रीहियवमतीभिरद्भिः पुरस्तात् समन्त्रं प्रोक्षणम् ।
४. तास्वप्सु किञ्चित् पाययित्वा तस्य पशोर्दक्षिणे बाहौ शेषस्य निनयनम् ।
५. अमन्त्रकं त्रिः प्रदक्षिणं पर्यग्नि कृत्वा पशोरुदङ्नयनम् ।
६. नीयमानस्य पशोः पुरस्ताद् दीप्ताग्रस्य काष्ठस्य हरणम् ।
७. उल्मुकाग्निरेव शामित्र इति तस्य तस्मिन्नायतने प्रतिष्ठापनम् ।
८. वपाश्रपणीभ्यां पशोरन्वारम्भणमध्वर्युस्थानीयस्य ।
९. तस्यान्वारम्भणं यजमानस्य ।
१०. पशोः संज्ञपनवपोद्धारवपाश्रपणप्रकाराः, शामित्रौपासनाग्न्योः पर्यावर्तनेन प्रधानाग्नौ वपाहोमः ।
११. अत्रैवाग्नौ स्थालीपाकश्रपणम् ।
१२. पशोरेकादशावदानानि ।
१३. अवदानक्रमः, अवदानेभ्यः प्राक् स्थालीपाकहोमः ।
१४. अवदानैः सह स्थालीपाकहोमो वा ।

सूत्रम्. विषयः.

१५. प्रत्यङ्गं द्विर्द्विरवदानम् ।

१६. तूष्णीं हृदयशूलचरणम् ।

---

दशमः खण्डः ।

१. चैत्ययज्ञे स्विष्टकृतः प्राग्बलिहरणम् ।
२. विदेशस्थस्यापि चैत्यस्य यागः ।
३. तदा पलाशवृक्षेण दूतं कारयित्वा तेन बलिहरणम् ।
४. समन्त्रकमुभौ पिण्डौ कृत्वा वीवधस्य शिक्ययोरभ्याधाय तस्य वीवधस्य दूतस्कन्धे निधानम् ।
५. इमं बलिं चैत्याय हरेति पिण्डमेकमभिमृश्य निर्देशः ।
६. अयं तुभ्यमिति दूतपिण्डमभिमृश्य वचनम् ।
७. अन्तरा भयसम्भावनायां दूताय खड्गादिदानम् ।
८. अन्तरा नौतार्याया नद्याः सत्त्वे प्लवरूपमलाबुपात्रादिकं दूताय दत्त्वानेन तरितव्यमित्युपदेशः ।
९. धन्वान्तरिनामकचैत्ययज्ञे अग्न्योरन्तरा पुरोहिताय प्रथमं बलिहरणं पश्चाद् धन्वान्तरये । होमस्तु धन्वान्तरिमात्रस्य । विदेशस्थत्वे तु धन्वान्तरये सपुरोहितायैकः पिण्डो दूताय द्वितीयः ।

सूत्रम्. विषयः.

५. एकेषां मते द्वाभ्यामृग्भ्यां नस्तःकरणम् ।

६. पुंसवनानवलोभनयोः प्राजापत्यः स्थालीपाकः । तत्राज्यभागान्ते नस्तःकरणं, ततः श्रुतहविष्यहोमः समन्त्रं पत्न्या हृदयदेशस्पर्शश्च ।

---

द्वादशः खण्डः ।

१. सीमन्तोन्नयनस्य चतुर्थे मासि कर्तव्यता, आधारसंस्कारत्वान्नास्य प्रतिगर्भमावृत्तिः, पूर्वयोस्तु–गर्भसंस्कारत्वादावृत्तिः ।

२. सीमन्तोन्नयनस्य शुक्लपक्षे पुंनक्षत्रेषु कर्तव्यत्वम् ।

३. तस्य षष्ठेऽष्टमे वापि मासे कर्तव्यता । तत्र समन्त्रकं होमविधानम् ।

४. शलाटुस्तबकेन त्रिषु स्थानेषु श्वेतवर्णया शलल्या कुशस्तम्बैश्च समन्त्रकं सीमन्तव्यूहनं त्रिश्चतुर्वा ।

५. वीणागाथिनोः संशासनं,

६. प्रैषक्रमः ।

७. गेयगाथावर्णनम् ।

८. यां नदीमुपजीवन्ति, तस्याः सम्बोधनं गेयगाथासु ।

९. पतिपुत्रवतीनां ब्राह्मणीनामुपदेशस्य यथावदनुष्ठानम् ।

१०. वृषभस्य दक्षिणात्वम् ।

---

त्रयोदशः खण्डः ।

१. जातकरणम् ।

२. जातस्योभयोः कर्णयोर्मेधाजननजपः ।

३. समन्त्रकमंसयोरभिमर्शनम् ।

४. नामकरणं, नामकरणकालश्च ।

५. नामलक्षणम् ।

सूत्रम्. विषयः.

६. कामनाभेदेन नाम्नोऽक्षरनियमः ।
७. पुंसो नाम्नि युग्माक्षरत्वनियमः ।
८. स्त्रिया अयुग्माक्षरत्वम् ।
९. अस्मिन्नेव कालेऽभिवादनीयस्य नाम्नः समीक्षणं, तस्य चोपनयनपर्यन्तं मातापितृव्यतिरिक्तस्याज्ञेयत्वम् ।
१०. प्रोष्यागते पितरि पुत्रे वा पुत्रस्य शिरः परिगृह्य मूर्धनि त्रिरवघ्राय समन्त्रकं पितुर्जपः ।
११. कुमार्यां त्विदं सर्वममन्त्रकम् ।

---

चतुर्दशः खण्डः ।

१. अन्नप्राशनम् ।
२. अन्नाद्यकामनायां व्यञ्जनत्वेनाजमांसप्राशनम् ।
३. ब्रह्मवर्चसकामनायां तथा तित्तिरिमांसप्राशनम् ।
४. तेजस्कामस्य घृतसंस्कृतौदनप्राशनम् ।
५. अकामस्य दधिघृतमधुमिश्रान्नप्राशनम् ।
६. अन्नप्राशनमन्त्रः ।
७. कुमार्या अमन्त्रकमन्नप्राशनम् ।

---

पञ्चदशः खण्डः ।

१. चौलकालः ।
२. उक्तकालेन सह यथाकुलधर्मं विकल्पः ।
३. व्रीहियवमाषतिलैः पृथक् पूर्णानां चतुर्णां पात्राणामग्नेरुत्तरतः स्थापनम् ।
४. अग्नेः पश्चान्मातुरुत्सङ्गे कुमारस्योपनिवेश्यत्वम् ।
५. आनडुहं गोमयं शमीपर्णानि च पश्चादग्नेर्नेत्रे शरावे उपनिधातव्यानि ।
६. मातुर्दक्षिणतः कुशस्तम्बान्यादाय पितुरासनम् ।

सूत्रम्. विषयः

६. आप्लुत्य वाग्यमनेनाहःशेषनयनम्, अनन्तरमाचार्यसकाशे वरदानाय वाग्विसर्गः ।
७. गोमिथुनमाचार्यदक्षिणा ।
८. अपरेद्युरहनि संवत्सर व्रतादेशः ।

---

सप्तदशः खण्डः ।

१. अष्टमे वर्षे ब्राह्मणस्योपनयनम् ।
२. गर्भाष्टमे वा ।
३. जन्मनो गर्भाद्वैकादशे क्षत्रियस्य ।
४. तथा द्वादशे वैश्यस्य ।
५. त्रैवर्णिकानामुपनयनकालेष्वनुकल्पः ।
६. तस्य व्यतिक्रमे तेषां पतितत्वम् ।
७. तेषां प्रायश्चित्ताकरणे उपनयनादिनिषेधः ।
८. त्रैवर्णिकानामजिनभेदः उपनयनं यज्ञोपवीतधारणं च ।
९. वर्णभेदेन वस्त्रभेदः ।
१०. वर्णभेदेन मेखलाभेदः ।
११. वर्णभेदेन दण्डभेदस्तत्प्रमाणभेदश्च ।
१२. दण्डेषु कामचारो वा ।
१३. समन्वारब्धवति कुमारे होमानन्तरमग्नेरुत्तरत अचार्यस्यावस्थानम् ।
१४. कुमारस्य चाचार्याभिमुख्येनावस्थानम् ।
१५. उदकपूर्णे कुमारस्याञ्जलौ स्वाञ्जलिस्थमुदकं समन्त्रकमवक्षार्य समन्त्रकं कुमारस्य साङ्गुष्ठपाणिग्रहणं प्रथमम् ।
१६. एवं द्वितीय तृतीयं च समन्त्रकं पाणिग्रहणम् ।
१७. समन्त्रकं कुमारस्य सूर्यप्रदर्शनम् ।
१८. परिदानमन्त्रजप ।
१९. कुमारस्य 'युवा सुवासा' इत्यर्धर्चेन प्रदक्षिणावर्तनम् ।

सूत्रम्. विषयः.

२०. कुमारस्यांसदेशयोः पाणी गमयित्वा 'तं धीरास' इत्यर्धर्चेन हृदयदेशस्पर्शः ।
२१. पुनरप्यग्निं परिसमूह्य तूष्णीं समिदाधानम् ।
२२. ब्रह्मचारिणस्तूष्णींहोमस्य च प्राजापत्यत्वेन प्रशंसा ।

---

अष्टादशः खण्डः ।

१. एकेषां मते समन्त्रकं समिदाधानम् ।
२. समिदाधानात् परमग्न्युपस्पर्शो मुखनिमार्जनं च ।
३. समिदाधानप्रशंसा ।
४. समन्त्रकमग्नेरुपस्थानम्, आचार्याभिवादनं सावित्र्युपदेशप्रार्थना च ।
५. सावित्र्युपदेशप्रकारः ।
६. यथाशक्ति सावित्रीं वाचयित्वा कुमारस्य हृदयदेशे समन्त्रकमूर्ध्वाङ्गुलेः पाणेरुपनिधानम् ।

---

एकोनविंशः खण्डः ।

१. कुमारस्य ब्रह्मचर्यादेशनम् ।
२. प्रतिवेदं द्वादशवार्षिकं ब्रह्मचर्यम् ।
३. ग्रहणान्तं वा ।
४. सायम्प्रातर्भिक्षाचरणम् ।
५. सायम्प्रातः समिदाधानम् ।
६. अप्रत्याख्यायिनि प्रथमभिक्षणम् ।
७. अप्रत्याख्यायिन्यां वा ।
८. भिक्षामन्त्रः ।
९. भिक्षान्तरग्रहणे मन्त्रविशेषः ।
१०. लब्धं भैक्षमाचार्याय निवेद्याहःशेषं यावत् स्थितिः ।
११ अनुप्रवचनार्थं ब्रह्मौदनं श्रपयित्वाचार्याय निवेदनम् ।
१२. 'सदसस्पतिमि'ति मन्त्रेण प्रथमहोमः ।


BHARATIYA VIDYA
LIBRARY

सूत्रम्. विषयः.

११. सर्वेषाम् ऋत्विजां वरणसमनन्तरं जप्यो मन्त्रः।
१२. जापानन्तरं होतुः प्रतिज्ञा ।
१३. ब्रह्मणः प्रतिज्ञा ।
१४. इतरेषामपि यथादेशं प्रतिज्ञा ।
१५. याजयिष्यतः प्रतिज्ञानात् पूर्वं जपविशेषः ।
१६. अन्यस्मै दत्तस्य प्रतिश्रुतस्य वार्त्विज्यस्याकर्तव्यता ।
१७. अहीनक्रतोरप्यार्त्विज्यस्याकर्तव्यत्वम् ।
१८. नीचदक्षिणस्य बहुवित्तस्याप्यार्त्विज्याकरणम् ।
१९. व्याधितादीनामार्त्विज्याभावः ।
२०. सोमप्रवाकं प्रति प्रश्नः ।
२१. कल्याणेषु याज्यादिषु कर्मणः कर्तव्यत्वम् ।
२२. ऋत्विजां स्त्रीमांसयोः प्रतिषेधः ।
२३. ऋत्विजां क्रत्वन्ते दक्षिणाग्निहोमानन्तरं गमनम् ।
२४. अनाहिताग्नेः ऋत्विजो मन्त्रान्तरेण गृह्याग्नौ होमः ।

---

एकविंशः खण्डः ।

१. वरणानन्तरमृत्विजां मधुपर्काहरणम् ।
२,३,४. उपस्थितस्य स्नातकस्य राज्ञ आचार्यादीनां च मधुपर्काहरणम् ।
५. मधुपर्के द्रव्यमिश्रणप्रकारः ।
६. आसनादिद्रव्येष्वेकैकस्य त्रिस्त्रिर्निवेदनम् ।
७. उदगग्रे विष्टरे मधुपर्कीयस्य जपित्वोपवेशनम् ।
८. प्रक्षालनार्थं विष्टरमाक्रम्य स्थित्वा वा पादप्रसारणम् ।
९. ब्राह्मणाय प्रथमं दक्षिणपादप्रसारणम् ।
१०. शूद्राय सव्यपादप्रसारणम् इतरयोर्यथेच्छम् ।
११. अर्घ्यग्रहणमाचमनीयं गन्धमाल्यादिपरिग्रहश्च ।
१२. आह्रियमाणं मधुपर्कं दृष्ट्वा मन्त्रजपः ।

सूत्रम्. विषयः.

१३. समन्त्रमञ्जलिना मधुपर्कग्रहण तदवेक्षणमनामिकाङ्गुष्ठिकाभ्यां त्रिः प्रदक्षिणमालोडनं पुरस्तान्निमार्जनं च ।
१४. एवं दक्षिणपश्चिमोत्तरभागेषु निमार्जनम् ।
१५. मन्त्रेण मध्यात् त्रिरुद्गृह्य प्रथम प्राशनम् ।
१६. मन्त्रान्तरेण द्वितीयं प्राशनम् ।
१७. तथा तृतीयं प्राशनम् ।
१८. सर्वप्राशनप्रतिषेधः ।
१९. आ तृप्तेः पानप्रतिषेव. ।
२०. मधुपर्कोच्छिष्टस्योदङ्मुखतया ब्राह्मणाय दानम् ।
२१. ब्राह्मणालाभे मधुपर्कस्याप्सु त्यागः ।
२२. सर्वप्राशनं वा ।
२३. आचमनीयजलेनान्वाचमनं प्रथमम् ।
२४. मन्त्रान्तरेण द्वितीयम् ।
२५. आचान्ताय गोर्निवेदनम् ।
२६. वधाभ्यनुज्ञायां जपित्वोङ्कुरुतेति वचनम् ।
२७. उत्सृष्टकामस्य जपित्वोमुत्सृजतेति वचनम् ।
२८. मधुपर्के भोजनस्यामांसत्वनिषेधः ।

---

## द्वितीयोऽध्यायः ।

### प्रथमः खण्डः ।

१. प्रतिसंवत्सरं श्रावणपौर्णमास्यां सर्पबलिः ।
२. अक्षतसक्तुभिः पूर्णस्य नवकलशस्य दर्व्याश्च नवे शिक्ये निधानम् ।
३. अक्षतान् धानाः कृत्वा तदर्धाशेऽसंस्कृतेन सर्पिषाञ्जनम् ।
४. अस्तमिते श्रपितस्य स्थालीपाकस्य होमचतुष्टयम्, एककपालस्य च पुरोडाशस्य सकृत् सर्वहोमः ।
५. अस्य पुरोडाशस्य घृतनिमज्जनमाविःपृष्ठता वा ।

सूत्रम्. - विषयः.

६. तस्य पुरोडाशस्य तेन घृतेन सह होमः ।
७. अक्तानां धानानां समन्त्रकमञ्जलिना होमः ।
८. अनक्तानां धानानां पुत्रादिभ्यो दानम् ।
९. कलशाद् दर्व्या गृहीतानां सक्तूनां गृहस्य प्राच्यां दिशि शुचौ देशे प्रक्षेपः ।
१०. बलिं प्रदक्षिणीकृत्य पश्चाद्भाग उपविश्योपांशु मन्त्रजपः ।
११. समन्त्रमानुपूर्व्येण पुत्रादीनां परिदानम् ।
१२. अन्तत आत्मनः परिदानम् ।
१३. कर्तृपत्न्योरन्तरा गमनप्रतिषेधः ।
१४. प्रत्यवरोहणपर्यन्तं सायम्प्रातर्बलिहरणम् ।
१५. एकेषां मते सर्वासामाहुतीनां तस्मिन्नेव दिने उपहरणीयत्वम् ।

---

द्वितीयः खण्डः ।

१. आश्वयुजपूर्णमास्यामाश्वयुजीकर्मणः कर्तव्यता ।
२. उक्तविधिना गृहमलङ्कृत्य पशुपतये स्थालीपाकं श्रपयित्वा होमः ।
३. अञ्जलिना पृषातकहोमः स्विष्टकृतादि च ।
४. सजूरित्यादिभिस्त्रिभिर्मन्त्रैराहिताग्नेराग्रयणस्थालीपाकहोमः ।
५. अनाहिताग्नेरपि शालाग्नौ होमः ।

---

तृतीयः खण्डः ।

१. प्रत्यवरोहणकालः ।
२. गृहं पूर्ववदलङ्कृत्य पायसं श्रपयित्वा द्वाभ्यां मन्त्राभ्यां होमः ।
३. अत्र होमे स्विष्टकृदभावः ।
४. अग्निं समीक्ष्य मन्त्रजपो हेमन्तध्यानं च ।

सूत्रम्. विषयः.

१६. पितरो वा ।

१७. प्रजापतिर्वा ।

१८. पशुकल्पे प्रोक्षणोपाकरणवर्जं पशुं संज्ञप्य वपाहोमः ।

१९. पश्वङ्गस्थालीपाकस्यावदानानां स्थालीपाकान्तरस्य च सह होममन्त्रः ।

२०. अष्टमी स्विष्टकृत आहुतिः ।

२१. नवावराणां ब्राह्मणानां भोजनम् ।

---

पञ्चमः खण्डः ।

१. नवम्यामन्वष्टक्यम् ।

२. अष्टकार्थमुपाकृतस्य मांसस्यैकदेशेन संस्कृतेनात्र ब्राह्मणभोजनम् ।

३. अग्निप्रतिष्ठापनं परिस्तृते बर्हिषि नानाविधाना हविषामासादन च ।

४. अस्य कर्मणः पिण्डपितृयज्ञकल्पेन कर्तव्यत्वम् ।

५. मधुमन्थवर्जमवसादितानां हविषां होमो मधुमन्थेन सह पितृभ्यो दानं पिण्डनिपरणं च ।

६. तैरेव द्रव्यैः पिण्डरूपेण मातृपितामहीप्रपितामहीभ्यो दानम् ।

७. स्त्रीपिण्डेषु सुरायवाग्नोरधिकतया दानम् ।

८. पिण्डद्वयपक्षे आयते द्वे रेखे, पिण्डषट्कपक्षे मण्डलाकाराः षड् लेखा ।

९. पूर्वस्यां रेखायां पूर्वासु वा तिसृषु रेखासु पित्रादीनां।पिण्डदानम् ।

१०. अपरस्यामपरासु वा स्त्रीणाम् ।

११. वर्षर्तौ कृष्णत्रयोदश्यां माघ्यावर्षेनाम्नः कर्मणः कर्तव्यत्वम् ।

१२. प्रतिमासमपरपक्षत्रयोदश्यां पूर्ववत् कर्मणः कर्तव्यत्वम् ।

१३. पितृभ्यो देयस्य गन्धमाल्यादेरयुग्मसङ्ख्याकत्वम् ।

सूत्रम्. विषयः.



षष्ठः खण्डः ।



सप्तमः खण्डः ।

नवमः खण्डः ।



दशमः खण्डः ।

# तृतीयोऽध्यायः ।

## प्रथमः खण्डः ।

सूत्रम्. विषयः.

१. पञ्च महायज्ञाः ।
२. तेषां नामानि ।
३. तेषां प्रत्येकं लक्षणानि ।
४. तेषामहरहः कर्तव्यता ।

---

## द्वितीयः खण्डः ।

१. स्वाध्यायविधिः ।
२. स्वाध्यायाध्ययने नियमविशेषाः ।
३. ओङ्कारपूर्विकाणां व्याहृतीनां प्रथमं वक्तव्यत्वम् ।
४. पच्छ इत्यादिक्रमेण सावित्र्या अनुवचनम् ।
५. अनन्तरं वक्ष्यमाणस्य स्वाध्यायस्याध्ययनम् ।
६. तानि च ऋगादीनि पुराणान्तानि ।
७. तेषामध्ययने पयःप्रभृत्याहुतिभिरिव देवतानां तृप्तिकथनम् ।
८. तथा पितॄणां तृप्तिकथनम् ।
९. देशकालाद्यनुरोधेन यावच्छक्यमध्ययनस्य कर्तव्यत्वम् ।
१०. अध्ययनसमापनमन्त्रः ।

---

## तृतीयः खण्डः ।

१. प्राजापत्यतीर्थेन देवतातर्पणम् ।
२. तर्पयितव्यानां देवतानां परिगणनम् ।
३. दैवेन तीर्थेनर्षितर्पणम् ।
४. तर्पयितव्यानामृषीणां परिगणनम् ।
५. पितृभिः सह प्राचीनावीतिना तर्पयितव्यानां परिगणनम् ।
६. पितृतीर्थेन पितॄस्तर्पयित्वा गृहमागत्य वैश्वदेवान्तेऽतिथिभ्यो दक्षिणादानम् ।

सूत्रम्. विषयः.

७. उक्तनियमासम्भवे गौणेनापि कल्पेन ब्रह्मयज्ञस्यावश्यकर्तव्यता ।

८. आत्मनो देशस्य वाशुचितायामेव ब्रह्मयज्ञस्यानध्यायः ।

---

चतुर्थः खण्डः ।

१. अध्यायोपाकरणम् ।

२. तस्य च श्रावणे भाद्रपदे वा मासि श्रवणनक्षत्रे कर्तव्यत्वम्

३. श्रावणपञ्चम्यां हस्तनक्षत्रयोगे वा ।

४. नवभिर्मन्त्रैराज्यहोमः ।

५. अथ दधिमिश्रसक्तुहोमः ।

६. अध्ययनार्थं सावित्र्यादीनामग्न्यादीनां स्विष्टकृतश्च होमो दधिसक्तुप्राशनं मार्जनं च ।

७. जपे उपवेशनादिनियमः ।

८. व्याहृतीनामोम्पूर्वत्वम् ।

९. ओङ्कारपूर्वां सावित्रीं चार्धर्चशश्चतुरभ्यस्य वेदारम्भः ।

१०. एवमुत्सर्गेऽपि केषाञ्चित् कर्मणां कर्तव्यत्वम् ।

११. षाण्मासिकोऽध्ययनकालः, समावृत्तस्य ब्रह्मचारिकल्पेनाध्ययननियमः ।

१२. ब्रह्मचारिणामाश्रमोक्तनियमेनाध्ययनम् ।

१३. समावृत्तस्य जायोपयमनम् ।

१४. तस्य प्राजापत्यत्वम् ।

१५. अध्ययनकाले पक्षभेदाः ।

१६. माघ्यां पौर्णमास्यामेताभ्य एव देवताभ्यो हुत्वान्तेऽवगाहनम् ।

१७. देवतातर्पणम्

१८. आचार्याणां पितॄणां च तर्पणम् ।

१९. अस्य कर्मण उत्सर्ग इति नाम ।

---

सूत्रम्. विषयः.

पञ्चमः खण्डः ।



---

षष्ठः खण्डः ।



---

सप्तमः खण्डः ।

सूत्रम्. विषयः.

४. धन्नाद्यकामस्यार्द्रसमिदाहरणम् ।
५. ब्रह्मवर्चसकामस्य शुष्कसमिदाहरणम् ।
६. उभयकामस्यार्धशुष्कसमिदाहरणम् ।
७. गोदानम् ।
८. मन्त्राणामात्मार्थत्वेनोहः ।
९. स्नानं वस्त्रधारणं चक्षुषोरञ्जनं च ।
१०. मणिकुण्डलधारणं ब्राह्मणस्य प्रथमं मुखे चन्दनानुलेपश्च ।
११. क्षत्रियस्य प्रथमं बाह्वोश्चन्दनानुलेपनम् ।
१२. वैश्यस्योदरे ।
१३. स्त्रिया गुह्ये ।
१४. दूतानामूर्वोः ।
१५. स्रक्चन्धनम् ।
१६. माल्यधारणप्रतिषेधः ।
१७. अवशेन माल्येत्युच्चारणेऽपि पुनः स्रगपदमुच्चार्यैव धारणम् ।
१८. उपानच्छत्रधारणम् ।
१९. वैणवदण्डधारणम् ।
२०. कण्ठे मणिं धृत्वोष्णीषं कृत्वा समन्त्रं समिदाधानम् ।
२१. लिङ्गमन्त्रेण हुत्वा होमसमापनम् ।
२२. मधुपर्कपूजायै रात्रौ स्नातकस्य पितृगृहे वासः ।
२३. दक्षिणां दत्त्वा गुरुमनुज्ञाप्य वा स्नानम् ।
२४. स्नातकव्रतानि ।
२५. तस्य प्रतिषिद्धानि कर्माणि ।
२६. स्नातकप्रशंसा ।

---

अष्टमः खण्डः ।

१ समावर्तमानस्य सम्बुद्ध्या गुरुनामग्रहणम् ।
२. वियुज्यचार्याय गुर्वनुज्ञाप्रार्थनम् ।
३. उपांशु मन्त्रजपः ।

| सूत्रम्. | विषयः. |
|---|---|
| ४. | अनन्तरमाचार्यस्य जपविधिः । |
| ५. | जप्यमन्त्रनिर्देशः । |
| ६. | जपं समाप्य विवत्स्याव इति लौकिक्या वाचो विसर्गः । |
| ७. | एवं विसृष्टस्य समावृत्तस्य प्रशंसा । |
| ८. | एवं समावृत्तस्य मार्गे प्रतिकूलपक्षिशब्दश्रवणे मन्त्रजपः । |
| ९. | तथा मृगशब्दश्रवणे मन्त्रजपः । |
| १०. | मार्गे भये सति तां दिशं प्रत्युभयतोदीप्तस्योल्मुकस्य प्रक्षेपः । |
| ११. | सर्वतो भयेऽष्टाभिराज्याहुतिभिर्होमः । |
| १२. | अथैशान्यां दिशि स्थित्वा मन्त्रजपः । |

---

नवमः खण्डः ।

| | |
|---|---|
| १. | पुरोहितस्य युद्धसन्नाहनम् । |
| २. | राजाधिरूढस्य रथस्य पश्चात् स्थित्वा मन्त्रजपः । |
| ३. | समन्त्रं कवचप्रदानम् । |
| ४. | तथा धनुर्दानम् । |
| ५. | राज्ञो मन्त्रजपः । |
| ६. | पुरोहितस्य मन्त्रजपः । |
| ७ | इषुधिप्रदानम् । |
| ८. | प्रस्थानसमये आचार्यस्य तिष्ठतो मन्त्रजपः । |
| ९. | अश्वाभिमन्त्रणम् । |
| १०. | इष्ववेक्षणमन्त्रः । |
| ११. | अङ्गुलित्रधारणमन्त्र. । |
| १२. | अथ सारथेर्मन्त्रजपः । |
| १३. | युद्धे प्रविशतो राज्ञो बहुभिर्मन्त्रैरन्वीक्षणम् । |
| १४. | सौपर्णमन्त्रनिर्देशः । |
| १५. | रथस्य प्रागादिमुखं प्रवर्तनम् । |

---

## अथ चतुर्थोऽध्यायः ।

### प्रथमः खण्डः ।



---

### द्वितीयः खण्डः ।

सूत्रम्. विषयः.

५. गोविशेषस्याजाविशेषस्य वानुस्तरणीत्वेन निर्देशः ।
६. पशोः सव्ये बाहौ रज्जुं बद्ध्वा प्रेतस्य पृष्ठतो नयनम् ।
७. मुक्तशिखानां पुत्रादीनां ज्यैष्ठ्यक्रमेण गमनम् ।
८. खानितस्य गर्तस्य त्रिरप्रदक्षिणं परिक्रमणं शमीशाखयोदकेन प्रोक्षणं च ।
९. खानिते गर्ते अग्नीनां निधानप्रकारः ।
१०. प्रेतस्यान्तर्वेदि निधानम् ।
११. इध्मचितेश्चयनम् ।
१२. तत्र प्रेतस्य संवेशनप्रकारः ।
१३. पत्न्या उत्तरतः संवेशनम् ।
१४. क्षत्रियस्य प्रेतस्योत्तरतः पत्न्या धनुपश्च संवेशनम् ।
१५. देवरादिभिः समन्त्रं पत्न्या उत्थापनम् ।
१६. वृपलेनोत्थापने कर्तुर्मन्त्रजपः ।
१७. धनुरादाने मन्त्रजपः ।
१८. वृपलेन धनुरादाने कर्तुर्मन्त्रजपः ।
१९. आरोपितं धनुश्छित्त्वेध्मचितौ प्रक्षेपः ।

---

## तृतीयः खण्डः ।

१—११. प्रेतस्य सर्वेष्वङ्गेषु यज्ञपात्राणां निधानम् ।
१२. बिलवतां पात्राणां पृषदाज्येन पूरणम् ।
१३, १४. दृपदुपलादीनां पुत्रस्योपयोगार्थं गृह एव निक्षेपः ।
१५. अनुस्तरणीपक्षे तस्या वपामुद्धृत्य समन्त्रं प्रेतस्य मुखशिरसोः प्रच्छादनम् ।
१६, १७. अनुस्तरण्या अङ्गानां प्रेतस्याङ्गेषु यथाक्रमं निधानम् ।
१८, १९. ओदनपिण्डयोरपि हृदये निधानं, वृक्कयाभाव एव तदिति मतान्तरम् ।
२०. सर्वाङ्गनिधानात् परमनुस्तरण्याश्चर्मणा प्रेतप्रच्छादनम् ।

सूत्रम्. विषयः.

७. गृहाद् बहिस्तमग्निं दीपयित्वार्धरात्रपर्यन्तं पुण्यकथादीनां कीर्तनम् ।

८. अर्धरात्रात् परमविच्छिन्नाया उदकधाराया दक्षिणद्वारेण हरणम् ।

९. अथ तत्र तमग्निमुपसमाधाय तस्य पश्चिमे देशे आनडुहं चर्मास्तीर्य तत्र समन्त्रमारोहणम् ।

१०. मध्यमपरिधेः समन्त्रं परिधानं दक्षिणोत्तरयोश्चामन्त्रकम् ।

११. उत्तरतोऽश्मानमवस्थाप्य चतसृभिराज्याहुतिभिर्हुत्वा कौटुम्बिकानामीक्षणम् ।

१२. युवतीनां नेत्राञ्जनं ततो निर्गमनं च ।

१३. युवतीनां नेत्राञ्जनसमये समन्त्रं कर्तुरीक्षणम् ।

१४. कर्तुरन्येषां चाश्माभिमर्शनम् ।

१५. अथाग्निमादाय गृहं प्रवेष्टुं सर्वेषां परिक्रमणमविच्छिन्नोदकधारास्रावणमैशान्यां दिशि स्थित्वा मन्त्रजपश्च ।

१६. परिणेतव्यस्यानडुहो लक्षणम् ।

१७. तस्याग्नेर्महानसे चुल्ल्यां प्रतिष्ठापन सर्वेषां स्वे स्वे शयनस्थाने स्थित्वा नवेन वाससा प्रच्छाद्यासूर्योदयाज्जागरणम् ।

१८. उदिते सूर्ये मङ्गल्यसूक्तजपो होमो ब्राह्मणभोजनं दक्षिणादानं स्वस्तिवाचनं च ।

---

अष्टमः खण्डः ।

१. श्राद्धानां चातुर्विध्यम् ।

२. वरणीयब्राह्मणलक्षणं ब्राह्मणसङ्ख्या उपवेशनप्रकारः उपचारा अर्घ्यपरिकल्पनं च ।

३. अर्घ्यप्रदानं तन्मन्त्राश्च ।

४. प्रतिब्राह्मणं सकृत् सकृदर्घ्यनिवेदनम् ।

५. तासामपामनुमन्त्रणम् ।

नवमः खण्डः ।



दशमः खण्डः ।

| सूत्रम्. | विषयः. |
|---|---|
| ३१. | उक्तस्य शूलगवस्य सर्वकामफलप्रदत्वम् । |
| ३२. | सर्वथास्य कर्मणः सकृत् कर्तव्यत्वम् । |
| ३३. | यजमानप्रशंसा । |
| ३४. | मङ्गल्यसूक्तं जपित्वा गृहस्य प्रत्यागमनम् । |
| ३५. | पशूनां रोगेऽस्यैव देवस्य यष्टव्यत्वम् । |
| ३६. | शूलगवस्य स्थाने सर्वहुतः स्थालीपाकः । |
| ३७. | होमानन्तरं धूमस्पर्शार्थं गवामानयनम् । |
| ३८. | मङ्गल्यं सूक्तं जपित्वा पशूनां मध्ये प्रवेशः । |
| ३९. | शौनकाचार्यनमस्कारः । |

इति चतुर्थोऽध्यायः ।

सूत्रम्. विषयः.

२१. प्रणीतानुमन्त्रणम् ।
२२. सव्यं जानु निपात्य चतसृभिराज्याहुतिभिर्दक्षिणाग्नौ होमः।
२३. पञ्चम्या आज्याहुतेः प्रेतस्योपरि होमः ।

---

चतुर्थः खण्डः ।

१. अग्निप्रज्वालनार्थं परिकर्मिणां युगपत् प्रेरणम् ।
२. आहवनीयस्य प्रथमं प्रज्वलने स्वर्गप्राप्तिः ।
३. तथा तत्पुत्रस्येह संसिद्धिः ।
४. गार्हपत्यदक्षिणाग्न्योः प्रज्वलने फलविशेषः ।
५. सर्वेषां युगपत् प्रज्वलने समृद्ध्यतिशयः ।
६. दह्यमानप्रेतानुमन्त्रणम् ।
७. एवं विदुषा पुत्रेण दाहे फलश्रुतिः ।
८. एवं संस्कृत्य प्रेतस्य जलपूर्णाज्जानुदघ्नाद् गर्तान्निष्क्रम्य धूमोद्गमसमय एव स्वर्गप्राप्तिः ।
९. मन्त्रं जपित्वा प्रेतमनवेक्ष्य गमनम् ।
१०. तटाकादौ सकृदुन्मज्ज्य प्रेताय जलाञ्जलिं दत्त्वा शुष्काणि वासांसि परिधाय दिवा चेदानक्षत्रदर्शनाद् रात्रौ चेदासूर्यदर्शनात् संहीभूयावस्थानम् ।
११. दृश्यमाने नक्षत्रे सूर्ये वा कनिष्ठादिक्रमेण ग्रामप्रवेशः ।
१२. गृहं प्राप्याश्मादीनां द्वारदेश एवोपस्पर्शः ।

---

पञ्चमः खण्डः ।

१. अस्मिन्नहोरात्रे गृहेऽन्नादिपाकप्रतिषेधः ।
२. अपरेद्युरारभ्य त्रिरात्रमक्षारलवणभोजनम् ।
३. महागुरुमृतौ द्वादशरात्रमिति मुख्यः कल्पः, त्रिरात्रमिति च गौणः ।
४. सपिण्डानां दशाहं दानाध्ययनादिनिषेधः ।

सूत्रम्. विषयः.

५. असपिण्डगुरुसूतावप्येवम् ।
६. सपिण्डास्वप्रत्तासु स्त्रीषु त्रिरात्रम् ।
७. महागुरुव्यतिरिक्ताचार्येऽप्यपि ।
८. समानोदकेष्वपि ।
९. प्रत्तस्त्रीदन्तजातादिष्वेकाहम् ।

---

षष्ठः खण्डः

१. अस्थिसञ्चयनकालः ।
२. शुभे कुम्भे पुंसोऽस्थिसञ्चयनम् ।
३. अलक्षणे कुम्भे स्त्रिया अस्थिसञ्चयनम् ।
४. संचेतृनियमः ।
५. क्षीरोदकेनायतनप्रोक्षणम् ।
६. अङ्गुष्ठोपकनिष्ठिकाभ्यामस्थ्यादायाशब्दं कुम्भे निधानम् ।
७. आपादतलादस्थ्ना यथाक्रममादानम् ।
८. अस्थिकुम्भस्य गर्ते निक्षेपः ।
९. कपालेन कुम्भमपिधाय जपित्वा पांसुभिरवकीर्य श्मशानात् प्रत्याव्रज्य स्नात्वा प्रेताय श्राद्धदानम् ।

---

सप्तमः खण्डः ।

१. पित्रादीनां गुरुजनानामुपर्युपरि मरणसम्भवेऽमायां शान्तिकर्मविधिः ।
२. प्रागुदयाद् गृह्योपकरणानां पचनाग्नेश्च दक्षिणस्यां दिश्युत्सर्गः ।
३. तमग्निं यत्रकुत्रापि प्रक्षिप्य त्रिरप्रदक्षिणं परिक्रमणम् ।
४. ततः पृष्ठतोऽनवेक्ष्य पुनराव्रज्य स्नात्वा वपनविधिः ।
५. नवानां मणिकादीनामुपकल्पनम् ।
६. अग्निवेलायां समन्त्रमरणेरग्निजननम् ।

॥ श्रीः ॥

# आश्वलायनगृह्यसूत्रम् ।

## अनाविलाख्यया श्रीहरदत्ताचार्यमिश्रविरचितया वृत्त्या समेतम् ।

---

उक्तानि वैतानिकानि । गृह्याणि वक्ष्यामः ॥ १ ॥

नमो रुद्राय यद् गृह्यमाश्वलायननिर्मितम् ।
क्रियते हरदत्तेन तस्य वृत्तिरनाविला ॥

द्विप्रकाराणि कर्माणि श्रुतिलक्षणान्याचारलक्षणानि च । तत्र उक्तानि वैतानिकानि वितानैरग्निभिः साध्यानि श्रुतिलक्षणानि कर्माणि । अथेदानीं गृह्याणि वक्ष्यामः । गृहाश्रमे भवोऽग्निर्गृह्यः । वक्ष्यति च "पाणिग्रहणादि गृह्यं परिचरेत्" इति । यस्मिन्नग्नौ पाणिं गृह्णीयात् स गृह्य इति च्छन्दोगाः । इह तु तत्साध्यानि कर्माणि विवक्षितानि । यद्यप्युपनयनादौ लौकिकोऽग्निः, रथारोहणादिष्वग्निरेव नास्ति, तथापि सर्वाण्येव स्मृत्याचारलक्षणानि कर्माणि गृह्याणीत्युच्यन्ते भूम्ना । किं प्रयोजनं सूत्रस्य । गृह्याणां कर्मणामधिकारः । तेन वक्ष्यमाणेषु कर्मसु सति सम्भवे गृह्योऽग्निः गृहस्थश्चाधिकारीति सिद्धम् । अथ गृह्याणि वक्ष्याम इत्येवाधिकारे सिद्धे उक्तानि वैतानिकानीत्युक्तानुभाषणं

---

१. 'घनानि' ग. पाठ २. 'द्वौ चाग्नि' ग. पाठ. ३. 'पु चाग्नि' ग. पाठ. ४. 'ण्युच्य' क. ख. ग. पाठ. ५. '॰। न भू' क., '॰न्ते नाम्ना' ग. ग. पाठ. ६ 'नीति भा' घ. पाठ.

G. P. T. 2,71. 24 1 21. 6

वक्ष्यमाणेषु तदपेक्षाप्रदर्शनार्थम्। तेन तत्र याः परिभाषाः "तस्य नित्याः प्राञ्चश्चेष्टा" इत्यादयः, तासां वक्ष्यमाणेष्वपि प्रवृत्तिर्भवति। प्रकरणभेदाद्धि न प्राप्नोति ॥ १ ॥

त्रयः पाकयज्ञाः ॥ २ ॥

पाकगुणका यज्ञाः पाकयज्ञा इति विज्ञायमाने आज्यहोमेषु "पाकयज्ञानामेतत्तन्त्रम्" इत्येष विधिर्न वर्तेते। तस्मादल्पवचनः पाकशब्दः, यथा योऽस्मात् पाकतर इति। प्रशंसावचनो वा, यथा तं पाकेन मनसापश्यमभित इति। अल्पायाससाध्यत्वादल्पत्वम्। महाफलत्वात् प्रशस्तत्वम्। वक्ष्यति च "अथ काम्यानां स्थाने काम्याः", "चरवः", "तानेव कामानाप्नोति" इति। ते पाकयज्ञास्त्रयः त्रिविधा इत्यर्थः ॥ २ ॥

तौ एव विधा लक्षणेन दर्शयति—

हुता अग्नौ हूयमानाः अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणिहुताः ॥ ३ ॥

हूयमानाः क्रियमाणा इत्यर्थः। नहि पाकयज्ञाः सर्वे हूयन्ते। हुता नाम पाकयज्ञाः पार्वणादयः। अनग्नौ प्रहुताः

---

१. 'र्न प्रव' क. ख. ग. पाठः. २. 'था अर्हदैधिपल्यो दत्तस्तिष्ठेते तत्र यो' ग, 'था अर्हदैधिपल्येति यो' घ. पाठः. ३. 'स्म' क. घ. पाठः. ४. 'रेति च। प्र' घ. पाठः. ५. 'न्ति' ख. पाठः. ६. 'स्व प्र', ७. 'त्व च। व', ८. 'ति अ' घ. पाठः. ९. 'व इ' क. ख. ग. पाठः. १०. 'तानेवेत्रिविधेन लक्षणेन सह द' ग. पाठः. ११. 'ज्ञा हू' क. ख. ग. पाठः.

अनग्नौ क्रियमाणाः प्रहुता नाम पाकयज्ञाः बलिहरण-ब्रह्मयज्ञादयः । ब्राह्मणभोजने ब्रह्मणिहुताः । यत्र ब्राह्मणभोजनमेव यत्र च ब्राह्मणभोजनमधिकं ते ब्रह्मणिहुताः आतिथ्यपार्वणश्राद्धादयः । त्रैविध्योपदेशस्य प्रयोजनं "पाकयज्ञानामेतत्तन्त्रमि"ति वक्ष्यते । तद् यादृशेषु पाकयज्ञेषु तन्त्रं समाम्नातं तादृशेष्वेव यथा स्यात् । कीदृशे चै तत् समाम्नातं, हुते । तस्माद्धुतेष्वेव तस्य तन्त्रस्य प्रवृत्तिः । तेन सर्पबल्यादावचदानधर्मो न भवति । ब्राह्मणभोजने निर्वापप्रोक्षणादयो न भवन्ति ॥ ३ ॥

देवतामुद्दिश्य द्रव्यत्यागो याग । स च ब्रह्मयज्ञादिषु नास्ति । तत् कथमेतेषु यज्ञशब्द इत्याशङ्कय तेषां यज्ञत्वमुपपादयितुमृच उदाहरति —

अथाप्यृच उदाहरति यः समिधा य आहुती यो वेदेनेति ॥

तत्राधिकपादग्रहणात् तृचस्य ग्रहणे प्राप्ते तृतीयार्थविरोधान्न गृह्यते । ऋच इति बहुवचनं वक्ष्यमाणापेक्षम् । यो मर्तो मर्त्यः समिधा अग्नये विभक्तिव्यत्ययः अग्निं ददाश दाशतिर्दानकर्मान्यत्र इह तु प्रीणने द्रष्टव्यः प्रीणाति । य आहुती तृतीयैकवचनस्य पूर्वसवर्णदीर्घः यश्चाहुत्याग्निं प्रीणाति । यो वेदेन यश्च वेदेनाग्निं प्रीणाति । यो नमसा यश्च नमस्कारेणाग्निं प्रीणाति । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः ।

---

१. 'ता व', २ 'य उदाहरण आ' क. ख. ग. पाठ . ३. 'ता नाम । आ' ग, 'ता नाम पाकयज्ञा । आ' घ. पाठ . ४. 'प' ग. घ. पाठ . ५. 'व तन्त्र' घ. पाठ ६ 'म' ग पाठ . ७. 'ज्ञशब्दत्व' क. ख. पाठ . ८. 'सा अग्नये ददाशेत्यपेक्ष्यते । यश्च' ग. घ पाठ .

सः स्वध्वरः स सर्वोऽपि शोभनयज्ञः, न केवलं य आहुत्या प्रीणाति स एव। किञ्च तस्येत् तस्यैव अर्वन्तः अश्वा रंहयन्ते गमयन्ति कं रथम् आशवः क्षिप्रगामिनः। द्युम्नितमं द्युम्नमिति *हिरण्यनाम अतिशयेन द्युम्नवत् द्युम्नितमम्*। एवंभूतं यशोऽपि तस्यैव। तस्य देवकृतमंहः व्यसनं कुतश्चनापि न नशत् न व्याप्नोति मर्त्यकृतं चांहो न नशद् इत्यृग्द्वयस्यार्थः॥ ४॥

**समिधमेवापि श्रद्दधान आदधन्मन्येत यज इदमिति नमस्तस्मै य आहुत्या यो वेदेनेति विद्ययैवाप्यस्ति प्रीतिस्तदेतत्पश्यन्नृषिरुवाच। अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः। घृतात् स्वादीयो मधुनश्च वोचतेति। वच एव स इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह। आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि। ते ते भवन्तूक्षण ऋषभासो वशा उतेति। एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति। य इमं स्वाध्यायमधीयत इति यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम इति हि ब्राह्मणं भवति॥ ५॥**

एवापिशब्दावल्पतां द्योतयतः। कैनिष्ठामात्रं हि समिद् तामपि श्रद्दधानो भूत्वा आदधत् पुरुषः यज इदमिति मन्येत याग एवायं मया क्रियत इति मन्येतेत्यर्थः। सूत्रकारोऽपि तं नमस्यति नमस्तस्मै। दृष्टश्चैवंविधः प्रासङ्गिकोऽन्यत्रापि

१. 'ति' क. ग. पाठ. २. 'काष्ठमा' ख. ग. पाठ.

नमस्कारः । यथा आर्षानुक्रमण्यां—"नमोऽत्रिभ्यस्त्वबोधि" इति । तदेवं यः समिधा ददाश सः स्वध्वर इति व्याख्यातम् । य आहुतीति व्याचष्टे— य आहुत्या । तृतीयैकवचनस्य पूर्वसवर्णदीर्घ इति व्याख्यातम् । यो वेदेनेति व्याख्यातुमुपादानं, व्याचष्टे— विद्ययैवाप्यस्ति प्रीतिः । दाशतिः प्रीत्यर्थ इत्यनेन दर्शितम् । तदेतत् पश्यन्नृषिरुवाच तदेतदनन्तरोक्तमर्थरूपं पश्यन्नृषिर्वैयश्वो विश्वमना उवाच । अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः । घृतात् स्वादीयो मधुनश्च वोचतेति । स्तुतिलक्षणां गां वाचं यो न निरुणद्धि तस्मै अगोरुधाय गविषे गामिच्छते द्युक्षाय द्युःस्थानाय दस्म्यम् अनुरूपं स्तुतिलक्षणं वचः घृताद् मधुनश्च स्वादीयः स्वादुतरं दर्शनीयं वोचत ब्रूत हे मदीया ऋत्विजः पुत्रपौत्रा वा । अत्र तृतीयं पादमर्थतो व्याचष्टे—वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह । मम स्वभूतमिदं वच एव घृताच्च मधुनश्च स्वादीयोऽस्त्विति यद् एतदेवानेन पादेन ऋषिराहेत्यर्थः । न केवलं घृताच्च मधुनश्च, मांसादपि स्वादुतरामिति दर्शयितुमृगन्तरमुदाहरति — आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि । ते ते भवन्तूक्षण ऋषभासो वशा उतेति । हे अग्ने! ते तुभ्यं हृदा तष्टं हृदयेन चिकीर्षितं हविः ऋचा ऋग्रूपेण आभरामसि आहरामो वयम् । ते, हविरपि परामृशतस्तच्छन्दस्योक्षादिभिः सामानाधिकरण्याच्छि-

१. 'ति ददाश स स्वध्वर इति व्या' क. ख. ग. पाठः. २. 'म', ३. 'ष्टे अत्र वि' ग. पाठः. ४. 'र्थे' क. पाठः.

ऋवचनभेदः, तादृग्रूपं हविः ते तव उक्षाण ऋषभाश्च वशाश्च भवन्ति । वन्ध्या गावो वशाः । व्याचष्टे — एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति । भरद्वाजस्यैषा— य इमं स्वाध्यायमधीयत इति । चलोपोऽत्र द्रष्टव्यः । ये चेमं स्वाध्यायमधीयत इति । न केवलं भरद्वाजस्यैव, किं तर्हि, अन्येऽपि य इमं स्वाध्यायमधीयते तेषामपि एते उक्षाण ऋषभाश्च वशाश्च भवन्ति, द्रष्टृव्यतिरिक्तानामप्यध्ययनमात्रेण भवन्तीत्यर्थः । यो नमसा स्वध्वर इति व्याख्येयोपादानं, व्याचष्टे — नमस्कारेण वै खल्वपि । अस्ति प्रीतिरित्यपेक्ष्यते । एतदेवोपपादयति — न वै देवा नमस्कारमति । वै प्रसिद्धौ । न खलु देवा नमस्कारमतिक्रामन्ति । "यज्ञो वै नम", इति हि ब्राह्मणं भवति । ततश्च यथा यज्ञं नातिक्रामन्ति, एवं नमस्कारमपीति[२] ॥ ५ ॥

इति हरदत्ताचार्यमिश्रकृतायामाश्वलायनगृह्यवृत्तौ
प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयादग्निहोत्रदेवताभ्यः सोमाय वनस्पतयेऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे स्वाहेति ॥ १ ॥

अथेमानि गृह्याणि विधीयन्ते, यानि प्राक् प्रतिज्ञातानि[३] इत्यथशब्दस्यार्थः । सायंशब्दो रात्रेरुपक्रमे प्रसिद्धः

---

१. 'र नाति' ख ग. पाठ. २. 'पि नातिक्रा(मति)॥ ३. 'नीत्यर्थ.' क. पाठ.

प्रातःशब्दश्चाह्नः । इह तु कृत्स्नां रात्रिं कृत्स्नं चाहः प्रतिपादयतः । सिद्धस्य भोजनार्थं पक्वस्य । तेनाशक्त्यादिना भोजनलोपे वैश्वदेवमेतन्न भवति, भोजनीयस्यान्नस्य संस्कारोऽयमिति कृत्वा । केचित्तु पुरुषसंस्कार उभयसंस्कारो वेति वदन्तो भोजनलोपेऽपि कुर्वन्ति । हविष्यस्येति वचनं व्यञ्जनानां मा भूदिति । यदा त्वहविष्यमेव कोद्रवादि भोज्यत्वेनोपस्थितं भवति, तदा आपस्तम्बेनोक्तं द्रष्टव्यम्—"अहविष्यस्य होमः उदीचीनमुष्णं भस्मापोह्य तस्मिन् जुहुयात् तद्धुतमहुतं चे"ति। अग्निहोत्रदेवताभ्यः, नायं मन्त्रः अग्निहोत्रदेवताभ्यः स्वाहेति होम इति, किं तर्हि, विधिः, अग्निहोत्रे या देवतास्ताभ्यो होमः कर्तव्य इति। तत्र यद्यप्यग्निहोत्रशब्दो द्रव्ये कर्मणि च वर्तते, तथापि न द्रव्यदेवता गृह्यन्ते "रौद्रङ्गविसद्" इत्यादयः षोडश, तासामभोक्तृत्वात् । याः पुनः कर्मदेवता "अग्निर्गृहपतिरि"त्याद्याः, ता अपि न गृह्यन्ते, अनित्यत्वात् । नहि ताः श्रुतावुपदिश्यन्ते । तथाच "तस्य वा एतस्याग्निहोत्रस्य सप्त च शतानि विंशतिश्चे"त्यत्र ता न गण्यन्ते । तस्मादग्निहोत्रे या देवतास्ताभ्यो होमः कर्तव्य इति । तस्माद् अग्नये स्वाहा प्रजापतये स्वाहा इति सायम् । सूर्याय स्वाहा प्रजापतये स्वाहा इति (होम?प्रातः) । सोमाय वनस्पतये। वनस्पतिः प्रधानभूतोऽपि दृष्टः पशुदेवताभ्यो वनस्पतिमनन्तरमिति । गुणभूतश्च सोमो वनस्पतिः सविता सत्यप्रसव इति । इह तु गुणभूत इत्युपदेशः । तस्मादेकाहुतिर्ब्रह्मणे स्वाहेति । स्वाहाकारान्तैर्मन्त्रैरित्येव सिद्धे स्वा-

हेति वचनमुत्तरार्थम् । स्वाहेत्यथ बलिहरणमिति अहोमेत्वाद्धि न प्राप्नोति ॥ १॥

**अथ बलिहरणमेताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्य इन्द्राय इन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशं ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये विश्वेभ्यो देवेभ्यः सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा । नक्तंचारिभ्य इति नक्तम् । रक्षोभ्य इत्युत्तरतः ॥ २ ॥**

एताभ्यश्चैवेति । याः पूर्वोक्ता देवताः ताभ्यश्च याश्च वक्ष्यन्ते अब्रादयो वास्तुदेवतान्तास्ताभ्यश्च पञ्चदशभ्यः । प्रागपवर्गम् । एवकारः पौनर्वचनिकः, याभ्यो होमस्ताभ्य एव बलिरपि । गृहदेवताभ्य इति नायं विधायकः, गृहे या देवता वास्तुविद्याप्रसिद्धाः ताभ्यो बलिरिति, वास्तुदेवताभ्य इति पृथग्वचनात् । तस्मान्मन्त्रोऽयम् । प्रतिदिशमिति प्रधानदिशां चतसृणां ग्रहणम्, इन्द्रादीनां चतुर्णामुपदेशात् । पुरुषास्तु तेन तेन समानदिशः । कस्य पुनः प्रतिदिशम् । पूर्वकृतानां बलीनामिति केचित् । यत्रकुत्रचिदित्यपरे । गृहस्यै प्रतिदिशमित्यन्ये । मध्य इति, दिग्देवतानां गृहस्य वा । विश्वेभ्यो देवेभ्य इत्येतदपि मध्य एव । नक्तंचारिभ्य इति नक्तं दिवाचारिभ्य इत्यस्य स्थाने । पूर्वत्र दिवाग्रहणं न कर्तव्यम् इह नक्तं विशेषविधानादेव पूर्वो विधिर्दिवा भविष्यति । तत्

१. 'मन्थात्वा' क. पाठ. २. 'स्येत्यन्ये' ख. पाठ.

क्रियते वैश्वदेवं प्रातरारम्भं यथा स्यादिति । उत्तरत इति सर्वेषां बलीनां गृहस्य वा। एतेन दक्षिणेति च व्याख्यातम् ॥ २ ॥

स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत् ॥ ३ ॥

प्राचीनावीतीत्यनुच्यमाने यथा "दक्षिणस्यां दिशि मासाः पितर" इत्यत्र पित्र्येऽपि प्राचीनावीतित्वं न भवति, तथात्रापि न स्यात्। यथा पूर्वेषु बलिष्वर्थसिद्धं निनयनं, तथेहापि सिद्धे निनयेदिति वचनं क्रियान्तरत्वज्ञापनार्थम्। तेन बलिहरणमिदं न भवति। ततश्च स्वाहाकाराभावः। तदत्र यद् अग्नौकरणं स देवयज्ञः । यद् बलिहरणं स भूतयज्ञः। यद् दक्षिणतो निनयनं स पितृयज्ञः। त एते त्रयोऽपि सहैव कर्तव्याः। तदर्थमिह शेषग्रहणम्। "अथ बलिहरणमि"त्यानन्तर्यार्थोऽथशब्दस्य। ब्रह्मयज्ञमनुष्ययज्ञौ वक्ष्येते। त एते पञ्च महायज्ञाः। कः पुनरस्याग्निः। गृह्याणीत्यधिकाराद् गृह्यः। गृहस्थश्चाधिकारी। तथाचापस्तम्बः—"गृहमेधिनोर्यद्दशनीयस्य होमा बलयश्चे"ति। "औपासने पचने वे"ति व्यवस्थितो विकल्पः—औपासनवत औपासने, विधुरादेः पचन इति। तथाच्छन्दोगानां गृह्ये—"यस्मिन्नग्नौ पाणिं गृह्णीयादि"ति प्रकृत्य वैश्वदेवमाम्नातम्। भाष्यकारस्तु "विवाहाग्नेः प्रागस्यारम्भादनियतोऽत्राग्निः, समावृत्तस्य च पृथक्पाकस्य

१. 'तं न' ख. ग. घ. पाठः. २. 'वेन' ग. पाठः. ३. 'श्च' क, ख. ग. पाठः. ४. 'श्रा छ' ख. ग. पाठः. ५. 'तोऽग्निः' ख. पाठः.

प्रागपि विवाहाद्वैश्वदेवं कर्तव्यमि"त्याह। स्मृतिषु च स्नातकप्रकरणे पञ्च महायज्ञा विहिताः, न गृहस्थप्रकरणे। पात्रस्य चाविहितत्वात् पाणिना होमा बलयश्चेति। अङ्गिरास्तु—

"शालाग्नौ विपचेदन्नं लौकिके वापि नित्यशः।
यस्मिन्नेव पचेदन्नं तस्मिन् होमो विधीयते॥"

इति॥ २॥

इति हरदत्ताचार्यमिश्रकृतायामाश्वलायनगृह्यवृत्तौ प्रथमाध्याये द्वितीयः खण्डः।

---

अथ तृतीयः खण्डः।

**अथ खलु यत्र क्व च होष्यन्त्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षड् लेखा उदगायतां पश्चात् प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमूह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदक्संस्थं तूष्णीं पर्युक्षणम्॥ १॥**

अथशब्दोऽधिकारार्थः। तेन पूर्वोक्ते वैश्वदेवे वक्ष्यमाणं तन्त्रं न भवति। खलुशब्दो वाक्यालङ्कारे। यत्रक्वचग्रहणस्याकरणे अथ खलु होष्यन्त्स्यादित्यहरहर्होमविधिः प्रसज्येत। करणे त्वन्यत्र विहितस्य होमस्य विशेषो विधीयत इति गम्यते। यत्र होष्यन्त्स्यादित्येव सिद्धे क्वचग्रहणं क्रियते यत्राग्निहोत्रिकं तन्त्रं, तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्याताविति तस्मिन्नौपासनेऽपि परिस्तरणादयो होष्यद्धर्मा

---

१. 'चाप्यवि' क पाठ.

यथा स्युरिति । इषोर्मात्रा अवरमात्रा यस्य तदिषुमात्रावरम् । अवरग्रहणादधिके[1] दोषाभावः । सर्वतः सर्वासु दिक्षु । इषुमात्रावरम् एवंभूतं स्थण्डिलमुपलिप्य तस्य पश्चिमे भागे उदगायतामेकां लेखामुल्लिखेत् । तस्यान्तयोरुपक्रमोपसंहारयोः प्रागायते द्वे नाना पृथक्तया असंसृष्टे इत्यर्थः । तयोश्च मध्ये प्रागायतास्तिस्त्र इति षड् लेखा उल्लिखति । षण्णामेवोपदेशेऽपि पुनः षड्ग्रहणं षण्णामुपरि प्रतिष्ठापनमग्नेर्यथा स्यादिति । ततस्तत् स्थण्डिलमभ्युक्षति । उपरि ततोऽग्निं प्रतिष्ठापयति । अन्वाधानं काष्ठैरुपसमिन्धनम् । तच्चोपसमिद्धेऽपि पुनः कर्माङ्गतया कर्तव्यम् । परिसमूहनं सोदकेन पाणिना परितो मार्जनम् । परिस्तरणं दर्भैः[2] । उपदेशक्रमादेव सिद्धे[3] उदक्संस्थवचनं सर्वासु दिक्षूदक्संस्थता यथा स्यादिति । तेन प्राक्प्रतीच्योरपि प्रागग्रैरेव परिस्तरणं भवति । तथाचापस्तम्बः—"प्रागग्रैर्दर्भैरग्निं परिस्तृणाती"ति । तत्र तु कल्पान्तरमप्युक्तं "प्रागुदगग्रैर्वे"ति । पर्युक्षणं परित उदकसेकः । तूष्णींवचनमाग्निहोत्रिके पर्युक्षणे दृष्टो मन्त्रो मा भूदिति । कथं पुनरतत्प्रकृतिके तस्मिंस्तस्य प्रसङ्गः । एतदेव ज्ञापयति तत्र पर्युक्षणे दृष्टो धर्मोऽत्रापि प्रवर्तत इति । तेन पुनःपुनरुदकमादाय त्रिः पर्युक्षणं भवति ॥ १ ॥

**पवित्राभ्यामाज्यस्योत्पवनम् ॥ २ ॥**

कर्तव्यमिति शेषः ॥ २ ॥

---

१ 'दधिको दोषावह ।स' ख पाठ २ 'र्भै परिस्तरणम् ख' क ग पाठ ३ 'द्धेऽप्युद' क पाठ

अथ किंलक्षणे पवित्रे कथञ्चोत्पवनं, तदर्थमुत्तरं सूत्रम्—

**अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ ३ ॥**

प्रशब्दः प्रकर्षवाची। तेन सूक्ष्मच्छिन्नाग्रयोरप्रतिषेधः। ययोरन्तर्गर्भो नास्ति तावनन्तर्गर्भौ। प्रादेशमात्रौ प्रादेशमात्रपरिमितौ एवम्भूतौ कुशौ पवित्रसंज्ञौ। संज्ञाप्रयोजनं "पवित्रे अन्तर्धाय दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तावि"त्यादौ। तौ कुशौ अन्तयोः अग्रमूलयोः नाना असंसृष्टे यथा भवतः तथा गृहीत्वा अङ्गुष्ठोपकनिष्ठिकाभ्यामङ्गुलीभ्यां ग्रहणम्। कनिष्ठिकायाः समीपे याङ्गुलिः सोपकनिष्ठिका। उत्तानाभ्यां पाणिभ्यामिति नियमः। सवितुष्ट्वेत्यनेन मन्त्रेण प्राक् प्रागपवर्गमुत्पुनाति। "तस्य नित्याः प्राच्यश्चेष्टा" इत्येव सिद्धे प्रागवचनं शास्त्रान्तरदृष्टपुनराहारनिवृत्त्यर्थम्। एतदेव ज्ञापकं शास्त्रान्तरदृष्टा विधयोऽसति विरोधेऽत्राप्याश्रयितव्या इति। तद्यथा—"पवित्रयोरेव तावच्छिनत्ति न नखेन अद्भिरनुमृज्ये"ति। तथा पृथक्त्वेनापि समौ दर्भौ भवतः— "समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रावि"ति। तत्र प्रादेशमात्रा-

---

१. 'शप' ख. घ. पाठः. २. 'ष्टस्य पु', ३. 'रस्य नि' घ. पाठः. ४. 'त्राश्र', ५ 'थुत्वेना' ख ग. पाठः.

वित्युक्तेऽपि समाविति वचनं पृथक्त्वार्थम् । तथोत्तरेणाग्निं संस्तीर्णेषु दर्भेषु द्वन्द्वशः पात्रप्रयोगः, प्रोक्षणीसंस्कारः, पात्रप्रोक्षणं, पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरूप्योदीचोऽङ्गारान्निरूह्य तेष्वधिश्रित्य ज्वलतावद्योत्य द्वे दर्भाग्रे प्रत्यस्य त्रिः पर्यग्नि कृत्वा उदगुद्वास्याङ्गारान् प्रत्यूह्यात्रोक्तमुत्पवनं भवति। "सर्वत्रैव कर्मावृत्ताविति" परिभाषा त्रिग्रहणे सति भवति। इह तु त्रिग्रहणाभावात् सकृन्मन्त्रेण द्विस्तूष्णीमित्युक्तम्। एवं चेत् त्रिग्रहणमेवास्तु। एवं सिद्धे यदेतदारभ्यते सकृन्मन्त्रेणेति तज्ज्ञापयति सत्यपि त्रिग्रहणे गार्ह्येष्वेषा परिभाषा न भवतीति। तेन "प्रदक्षिणं शिरस्त्रिरुन्दति *त्रिस्तेजसा मा समनज्मी*"त्यत्र *यावत्कर्माभ्यासं मन्त्रा*वृत्तिः सिद्धा भवति। प्राङुत्पुनातीति प्रसिद्धः पाठः। तत्र कर्तुः प्राङ्मुखत्वं प्राप्नोति। तस्माद्यथोक्त एव पाठः। इह तु द्विरुत्पवनं विधीयते आज्यस्योत्पवनमिति प्रागुत्पुनातीति च। तत्र यः समन्त्रको विधिः तस्य प्रकरणे निवेशः, इतरस्यान्यत्र "तमतिनीय चतुर्गृहीतमाज्यं जुहुयादि"त्यादौ ॥३॥

**कृताकृतमाज्यहोमेषु परिस्तरणम् ॥ ४ ॥**

येषु होमेषु आज्यमेव हविः तेषु परिस्तरणं कृताकृतं क्रियतां वा मा वा, वैकल्पिकमित्यर्थः ॥ ४ ॥

**तथाज्यभागौ पाकयज्ञेषु ॥ ५ ॥**

पाकयज्ञग्रहणमाज्यहोमाधिकारनिवृत्त्यर्थम्। सर्वेषु पाकयज्ञेष्वाज्यभागौ कृताकृताविस्यर्थः ॥ ५ ॥

---

१. 'पृथक्त्वार्थम्' क. ख. ग. पाठ.

ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जम् ॥ ६ ॥

योऽयं ब्रह्मा शास्त्रान्तरेषु प्रसिद्धः "ब्रह्माणं दक्षिणतो दर्भेषु निषाद्ये"ति प्राप्तः, सोऽप्यत्र कृताकृतः धन्वन्तरियज्ञं शूलगवं च वर्जयित्वान्येषु पाकयज्ञेषु वैकल्पिकः । तयोस्तु नित्य इत्यर्थः । परिस्तरणादीनां चेच्छातो विकल्पः, अन्यतमं क्रियते अन्यतमं न सर्वाणि वा क्रियन्ते नवेति, न तु सह-प्रवृत्तिः सह वा निवृत्तिरिति नियमः, कारणाभावात् ॥६॥

अमुष्मै स्वाहेति जुहुयात् ॥ ७ ॥

इह तद्देवत्यैर्मन्त्रैश्च होमो दृष्टः "अग्ने नय सुपथा राये अस्मानिति द्वे" इत्यादौ । देवतापदैश्च "सावित्र्यै ब्रह्मणे" इत्यादौ "अथ काम्यानां स्थान" इत्यादौ च देवता उपदिष्टाः, न मन्त्राः । तत्र किं तद्देवत्यैर्मन्त्रैर्होमः उत देवतापदैरिति संशये देवतापदैरिति अनेन विधीयते । अमुष्मा इति देवतापदस्य चतुर्थ्यन्तस्योपलक्षणम् । स्वाहेति परिभाषासिद्धस्यैवानुवादः स्वाहाकारान्तैर्मन्त्रैरिति ॥ ७ ॥

अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे ॥ ८ ॥

यत्र होमश्चोद्यते न मन्त्रः तत्रैताभ्यो देवताभ्यो होमः कर्तव्यः । चौलकर्मोपनयनगोदानविवाहा उदाहरणम् । तत्र हि "नैके काञ्चने"ति पक्षे मन्त्राः प्रतिषिद्धाः । होमश्चोदितः "तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादि"ति । तत्रैताभ्यो देवताभ्यो होमः कर्तव्य इति ॥ ८ ॥

---

१. 'ष्टाः । त' ख. घ. पाठ. २. 'स्य संवा' ख. पाठ. ३. 'दात् स्वा' ग. पाठ., ४. 'भ्यः । किमुदाहरणं चौलो .... हा । त' ग. घ. पाठ.

एकबर्हिरिध्माज्यस्विष्टकृतः स्युस्तुल्यकालाः ॥ ९ ॥

पाकयज्ञाः शास्त्रतोऽर्थतो वा आश्वयुजीकर्माग्रयणादयः। तेषु बर्हिरादयस्तन्त्रभूता इत्यर्थः। बर्हिरादिग्रहणमुपलक्षणम्। तेन परिस्तरणादीनामपि सकृदेव क्रिया भवति। देशकालकर्त्रैक्यादेव तन्त्रत्वे सिद्धे समानदेवत्येषु तुल्यकालेषु प्रधानाहुतीनां तन्त्रता मा भूदित्येवमर्थमिदमारभ्यते ॥ ९ ॥

तद्यज्ञगाथोदाहरणेन स्पष्टयति —

तदेषाभियज्ञगाथा गीयते—

पाकयज्ञान् समासाद्य एकाज्यानेकबर्हिषः ।
एकस्विष्टकृतः कुर्यान्नानापि सति दैवते ॥

इति ॥ १० ॥

नानापि सति दैवते अपिशब्दादेकस्मिन्नपि दैवते आज्यादीनामेव तन्त्रत्वं न प्रधानाहुतीनामिति नानार्थः ॥ १० ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये तृतीयः खण्डः ।

---

अथ चतुर्थः खण्डः ।

उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥ १ ॥

उदगयनं प्रसिद्धम्। आपूर्यमाणश्चासौ पक्षश्चेत्यापूर्यमाणपक्षः। केन पुनरापूर्यते, शुक्लेन ज्योतिषा। अहरहः यस्मिन् कर्मणि यन्नक्षत्रं ज्योतिःशास्त्रविहितं तत् कल्याणम्। उदग-

यनादिविधानं दक्षिणायनादिप्रतिषेधार्थम् । अहनीति च वक्तव्यं रात्रौ मा भूदिति । समुच्चयश्चोदगयनादीनां न विकल्पः । "तृतीये वर्षे चौलमि"तिवत् सिद्धे कर्मग्रहणं सर्वकर्मणामुदगयनादौ प्रवृत्त्यर्थम् । चौलादिग्रहणं तु "तेषां पुरस्ताच्चतस्र आज्याहुतीरि"त्यत्र चौलादीनामेव ग्रहणं यथा स्यादिति । नैमित्तिकानि तु निमित्तानन्तरमेव कार्याणि यथा "कपोतश्चेदगारमुपहन्यादि"ति । अपर आह कर्मग्रहणं चौलेनैव सम्बध्यते चौलकर्मेति । "तृतीये वर्षे चौलमि"त्यत्र त्वेकदेशग्रहणं द्रष्टव्यं भीमसेनो भीम इतिवत् । तस्माच्चतुर्णामेव कालनियम इति । व्रतादेशनेषु तु भवति, "एतेन वापनादिपरिदानान्तमि"त्युपनयनातिदेशात् । एवं चौलातिदेशादेव सिद्धे गोदानग्रहणं यत्र गोदानगन्धोऽप्यस्ति तत्रापि कथमयं कालः स्यादिति । यथा समावर्तने "गोदानिकं कर्म कुर्वीते"ति । समावर्तनग्रहणमेव तु न कृतं लाघवार्थम् ॥ १ ॥

सार्वकालमेके विवाहम् ॥ २ ॥

एके आचार्याः सार्वकालं सर्वस्मिन् काले कर्तव्यं विवाहं मन्यन्ते । "शैशिरौ मासौ परिहाप्योत्तमं च नैदाघम्" इत्यापस्तम्बीयो विशेषः ॥ २ ॥

तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात् ॥ ३ ॥

१. 'स्यादि । अ' घ. पाठः. २. 'न्य. स्वस्पोऽप्य' क. पाठः.

तेषामित्यनन्तरस्ये[2] विवाहस्यैव सम्बन्धो मा भूदिति। ज्ञापकात् सिद्धम् । यदयं "विवाहे चतुर्थीमि"त्युत्तरत्र विवाहग्रहणं करोति तज्ज्ञापयति इह सर्वेषां सम्बन्ध इति । तर्हि विस्पष्टार्थं तेषांग्रहणम् । चतसृग्रहणमनर्थकं चतसृणामेवोपदेशात् । नियमार्थं तु, चतस्र एव तेषामाहुतय इति । तेनाज्यभागौ पक्षेऽपि न भवतः । स्विष्टकृत्तु भवति पुरस्ताद्ग्रहणात्, पुरस्ताच्चतस्र एवेति नियमात् । यत्र होम उपदिश्यते न द्रव्यं तत्राज्यमेव प्राप्तं दर्शयति — "आज्यशेषेण वानक्ति हृदये" इति । स्पष्टं चैतत् कल्पान्तरे "जुहोतीति चोद्यमाने सर्पिराज्यं प्रतीयादि"ति । एवमिहापि सिद्धे आज्यग्रहणमाज्यहोमा एव ते कथं स्युरिति । तेन विवाहे लाजेषु सत्स्वपि "कृताकृतमाज्यहोमेषु परिस्तरणम्" इत्येतद् भवति ॥

**अग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च व्याहृतिभिर्वा ॥ ४ ॥**

अस्मिञ्छास्त्रे व्याहृतिग्रहणे चतस्र एव गृह्यन्ते परिभाषितत्वात् । व्याहृतिश्च भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवःसुवः स्वाहेति । तत्र भूः स्वाहेत्यादिषु स्वरूपेण पठ्यमानेष्वपि व्याहृतिभिश्चेति वचनमेतदर्थमेव कृतम् ॥ ४ ॥

**समुच्चयमेके ॥ ५ ॥**

एके आचार्याः पूर्वोक्तानामष्टानामाहुतीनां समुच्चयमिच्छन्ति ॥ ५ ॥

१. 'ष्यैव वि' क. पाठ २. 'स्य म', ३. 'ते तत्र सर्वदाज्य' ख. पाठ..

नैके काञ्चन ॥ ६ ॥

एके त्वाचार्याः काञ्चनाप्याहुतिमासां[1][2] नेच्छन्ति । आहुतीनामासामर्थं प्रतिषेधः काञ्चनग्रहणात् , न होमप्रतिषेधः। तेनास्मिन् पक्षेऽनादेशाहुतयो भवन्ति ॥ ६ ॥

त्वमर्यमा भवसि यत् कनीनामिति विवाहे चतुर्थीम् ॥

संख्यानिर्देशे यत्र पूर्वोक्तस्योद्धारमिच्छति, करोति तत्र यत्नम् । यथा "तृतीयस्याह्नः स्थाने महाव्रतम्" इति । यत्नाभावे तूत्कर्षो भवति नोद्धारः । यथा "प्रतिप्रस्थाता वाजिने तृतीय" इति । तस्मादिहाप्युत्कर्षः प्राजापत्यायाः, नोद्धारः । पञ्चैता आहुतयः ॥ ७ ॥

कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥ ८ ॥

सम्पन्नेष्वपि गुणेषु कुलमेव प्रधानमिति प्रदर्शनार्थमग्र इत्युक्तम् । मातृतः पितृतश्च विद्यादिभिर्दशपुरुषशुद्धिः कुलम् । तत् प्रथमं परीक्षेत पश्चाद् गुणान्तरमित्यर्थः ॥ ८ ॥

अथापरे गुणा विधीयन्ते—

बुद्धिमते कन्यां प्रयच्छेत् ॥ ९ ॥

शास्त्राविरुद्धदृष्टादृष्टविषया बुद्धिः ॥ ९ ॥

कन्यागुणानाह—

बुद्धिरूपशीललक्षणसंपन्नामरोगामुपयच्छेत ॥ १० ॥

---

१. 'तिं समाने' ख. पाठः. २. 'मेका ने' घ. पाठः.

बुद्धिर्व्याख्याता। रूपं वराय रुचितम्। लक्षणानि सामुद्रिकादिप्रसिद्धानि॥ १०॥

**दुर्ज्ञेयानि लक्षणानि॥ ११॥**

शास्त्राणां बहुत्वात् परस्परविरोधाच्च दुर्ज्ञेयत्वं लक्षणानाम्॥ ११॥

का तर्हि गतिरित्याह—

**अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितं यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत् सत्यं तद् दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति॥ १२॥**

वक्ष्यमाणैर्द्रव्यैरष्टौ पिण्डान् कृत्वा 'ऋतमग्र' इत्यनेन मन्त्रेण तान् पिण्डानभिमन्त्र्य वरः कुमारीं ब्रूयाद् एषां पिण्डानां मध्ये एकं गृहाणेति। पुनः पिण्डानिति वचनं कुमार्या अभिमन्त्रणं मा भूत्। सन्निधानाद् द्वितीयानिर्देशान्मन्त्रलिङ्गस्य चाविशेषात् तस्या अपि प्रसङ्गः॥ १२॥

**क्षेत्राच्चेदुभयतःसस्याद् गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्यात्॥ १३॥**

यस्मिन् क्षेत्रे प्रतिसंवत्सरं द्विः सस्यं निष्पद्यते तदुभयतःसस्यं, तस्मात् क्षेत्रादाहृतं पिण्डं यदि सा गृह्णीयाद् अस्याः प्रजा अन्नवती भविष्यतीति विद्याज्जानीयात्॥ १३॥

**गोष्ठात् पशुमती॥ १४॥**

गृह्णीयाच्चेदस्याः प्रजा भविष्यतीति विद्यादिति स-

---

१. 'ऽऽमन्त्र' घ. पाठ. २. 'ति। द्रव्याणि वक्ष्यति। नेर' ग. पाठः

वेत्रानुवर्तते । गोष्ठं गोस्थानम् । ततश्चेदाहृतं पिण्डं गृह्णीयात् पशुमत्यस्याः प्रजा भविष्यतीति विद्यात् । एवमुत्तरेष्वपि द्रष्टव्यम् ॥ १४ ॥

वेदिपुरीषाद् ब्रह्मवर्चस्विनी ॥ १५ ॥

वेदिगताः पांसवो वेदिपुरीषम् । वृत्तस्वाध्यायकृतं यशो ब्रह्मवर्चसम् ॥ १५ ॥

अविदासिनो ह्रदात् सर्वसम्पन्ना ॥ १६ ॥

अविदासी अशोष्यः । दसिरुपक्षये ॥ १६ ॥

देवनात् कितवी ॥ १७ ॥

देवनं द्यूतस्थानम् । कितवी द्यूतपरा ॥ १७ ॥

चतुष्पथाद् विप्रव्राजिनी ॥ १८ ॥

चतुर्णां पथां समाहारश्चतुष्पथम् । विविधं या प्रव्रजति सा विप्रव्राजिनी, स्वकुले न तिष्ठतीत्यर्थः ॥ १८ ॥

इरिणादधन्या ॥ १९ ॥

ऊषरप्रदेश इरिणं, यत्र धान्यं न प्ररोहति । अधन्या धनरहिता ॥ १९ ॥

श्मशानात् पतिघ्नी ॥ २० ॥

तस्याः प्रजा पतिघ्नीत्येके । स्वयमित्यन्ये ॥ २० ॥

अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः ॥ २१ ॥

अथ ब्राह्मादयोऽष्टौ विवाहाः । तत्राद्यौ ब्राह्मणानामेव भवतः प्रतिग्रहात्विज्यसंयोगात् । गान्धर्वः क्षत्रियस्य पुराणेषु दर्शनात् , तथा राक्षसो युद्धसंयोगात् । आसुरो वैश्यस्य

द्रव्यसंयोगात्। अन्ये, त्रयोऽनियताः हेत्वभावात्। पैशाचो निन्दितः॥ २१॥

**तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः॥ २२॥**

तस्यां ब्राह्मविवाहोढायां जातः पुत्रः उभयतः मातृवंशे पितृवंशे च परानवरान् द्वादश द्वादश पुनाति। एवमुत्तरत्रापि॥ २२॥

**ऋत्विजे वितते कर्मणि दद्यादलङ्कृत्य स दैवः॥ २३॥**

वितते कर्मणि कर्ममध्य इत्यर्थः॥ २३॥

**दशावरान् दश परान् पुनात्युभयतः॥ २४॥**

तस्यां जात इति सर्वत्रानुवर्तते॥ २४॥

**सह धर्मं चरतम् इति प्राजापत्यः॥ २५॥**

सह धर्मं चरतम् इति समयं कृत्वा यत्र प्रदानं स प्राजापत्यः। यद्यप्यन्येष्वपि विवाहेषु सहधर्मचरणमस्ति, तथाप्यत्र यावज्जीवं सहधर्मचरणमेव न मध्ये आश्रमान्तरप्राप्तिरिति विशेषः। किञ्च तथा तयैव सहधर्मचरणं न स्त्र्यन्तरविवाहः॥ २५॥

**अष्टावरानष्ट परान् पुनात्युभयतः॥ २६॥**

**गोमिथुनं दत्त्वोपयच्छेत स आर्षः। २७॥**

**सप्तावरान् सप्त परान् पुनात्युभयतः॥ २८॥**

**मिथः समयं कृत्वोपयच्छेत स गान्धर्वः॥ २९॥**

मिथः रहसि परस्परं वा। समयं भद्रे भजस्व मां भद्र! भजस्व मामित्येवमादि॥ २९॥

**धनेनोपतोष्योपयच्छेत स आसुरः ॥ ३० ॥**

"वित्तेनानतिः स्त्रीमतामासुर" इति गौतमः। तेन कन्याया धनेनोपतोषणेऽपि नासुरत्वम् ॥ ३० ॥

**सुप्तानां प्रमत्तानां वापहरेत् स पैशाचः ॥ ३१ ॥**

प्रमादोऽनवधानता ॥ ३१ ॥

**हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत् स राक्षसः ॥ ३२ ॥**

इति हरदत्ताचार्यमिश्रकृतायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये चतुर्थ खण्डः ।

---

अथ पञ्चमः खण्डः ।

**अथखलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात् ॥ १ ॥**

अथखल्विति वाक्योपन्यासे । उच्चावचा अनियताः, नैकरूपा इत्यर्थः । जनपदा अङ्गवङ्गादयः । जनपदधर्मान् ग्रामधर्मांश्च विवाहे प्रतीयादित्येव वक्तव्ये तानिति वचनसामर्थ्यात् तादृशानित्यर्थः । तेन कुलधर्माणामपि ग्रहणम् । प्रतीयात् जानीयात् । ज्ञानेन चात्र तत्पूर्वकं करणं लक्ष्यते । कुर्यादित्यर्थः । विवाहाधिकारे विवाहग्रहणं कृत्स्ने विवाहे एते धर्मा यथा स्युरिति । उपयमनादुत्तरकालं विधानादुपयमने न स्युः ॥ १ ॥

**यत्तु समानं तद्वक्ष्यामः ॥ २ ॥**

यत् सर्वेषां समानं यथान्यानि कर्माण्यविशेषोपदेशा-

देव सर्वेषु जनपदादिषु भवन्ति तथात्रापि सिद्धे नियमार्थमिदमारभ्यते — यद्वक्ष्यामस्तत् सर्वेषां भवतीति। तेन जनपदादिधर्मस्य वक्ष्यमाणस्य च विरोधे वक्ष्यमाणमेव भवति। तद्यथा — केषुचिद् देशेषु सद्यः समावेशनं दृष्टं वक्ष्यमाणेन त्रिरात्रं द्वादशरात्रमिति ब्रह्मचर्येण बाध्यते ॥ २ ॥

**पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयेत पुमांस एव मे पुत्रा जायेरन्निति अङ्गुलीरेव स्त्रीकामो रोमान्ते हस्तं साङ्गुष्ठमुभयकामः ॥ ३ ॥**

मृन्मय्या अपि दृषदः संभवादश्मग्रहणम्। अश्मनो यस्यकस्यचिद् ग्रहणाय दृषदमित्युक्तम्। यया पिष्यते सा दृषत्। उत्तरपुरस्तात् उत्तरस्याः पूर्वस्याश्च दिशोरन्तराले। समन्वारब्धायां समन्वारब्धवत्याम्। हुत्वा तिष्ठन्निति होमोत्तरकालं स्थाने[1]दर्शनादासीन एव जुहोतीति दर्शयति। सामान्यापेक्षं[2] च दर्शनम् आसीनो दर्विहोमान् जुहोतीति। प्रत्यङ्मुख इति वचनं प्राक्चेष्टानिवृत्त्यर्थम्। प्राङ्मुख्या इति वचनं लज्जादिनावाङ्मुखीत्वनिवृत्त्यर्थम्। इह आसीनाया इति वचनमुत्तरं कर्म तिष्ठन्त्याः स्यादिति। गृभ्णामि ते सौभगत्वाय हस्तमिति हस्तं गृह्णीयादिति नित्यो विधिः। इतरे गुणकामाः।

१. 'न दर्शयन्नासी' क. ग. घ. पाठः. २. 'क्षं द' ख. ग. पाठः.

तथाचाङ्गुष्ठमेवाङ्गुलीरेवेत्येवकारः सङ्गच्छते। "दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं गृह्णीयादि"त्यापस्तम्बः। पुत्रशब्दस्य स्त्र्यपत्येऽपि दर्शनात् पुमांस इत्युक्तम्। स्त्रीशब्दो दुहितृवाची पुत्रसन्निधानात्। रोमान्ते रोमवतः प्रदेशादुपरि। उभयकामः पुत्रकामः स्त्रीकामश्च ॥ ३ ॥

**प्रदक्षिणमग्निमुदकुम्भं च त्रिः परिणयन् जपति ॥ ४ ॥**

सर्वेषां यज्ञाङ्गाना प्रदक्षिणेऽप्यन्तरीभावः। अन्यान्यपि यज्ञाङ्गान्युपयुक्तानि "न विहारेण व्यवेयादि"ति वचनात्। उदकुम्भग्रहणं त्विह नियमार्थं — हविर्व्यतिरिक्तं यद् विवाहे विशेषविहितं तत्रोदकुम्भमेवेति। तेनाश्मनो न भवति। लाजानां तु भवत्येव। त्रिरित्यस्य परिणयन्नित्यनेन सम्बन्धः अनन्तरत्वात्, न जपतीत्यनेन व्यवहितत्वात्। "परिणीय परिणीये"ति वीप्सा च तमेवार्थं स्पष्टयति। परिणयनाङ्गत्वाच्च जपस्य यावत्परिणयनमावृत्तिः ॥ ४ ॥

**अमोहमस्मि सा त्वं सा त्वमस्य मोहं द्यौरहं पृथिवी त्वं सामाहमृक् त्वं तावेह विवहावहै प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति ॥ ५ ॥**

परिणयनमन्त्रोऽयम् ॥ ५ ॥

**परिणीय परिणीयाश्मानमारोहति ॥ ६ ॥**

---

१. 'तदाश्म' क. पाठः

वीप्सावचनाद् यावत्परिणयनमारोहणम् । "दक्षिणेन पदाश्मानमास्थापयती"त्यापस्तम्बः ॥ ६ ॥

**इममश्मानमारोहाश्मेव त्वं स्थिरा भव सहस्व पृतनायतोऽभितिष्ठ प्रतन्यत इति ॥ ७ ॥**

अश्मारोहणमन्त्रोऽयम् ॥ ७ ॥

**वध्वोऽञ्जला उपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति ॥ ८ ॥**

वध्वौ इति प्राप्ते वध्व इति छान्दसो निर्देशः । अपपाठो वा । भ्राता सोदर्यः । भ्रातृस्थानो भ्रातृस्थानीयः पितृव्यपुत्रादिः ॥ ८ ॥

**त्रिर्जामदग्नीनाम् ॥ ९ ॥**

जमदग्निशब्दो गर्गादिः । तत्र यञो लुकि जमदग्नीनामिति भवितव्यम् । "जमदग्नीनां तु पञ्चावत्तमि"त्यापस्तम्बश्च । तस्माच्छिवादिष्वप्ययं पठितव्यः । तथाच 'जामदग्नो वत्सा' इति प्रवरेषु पठितम् । प्रवरो जामदग्नो भवति ॥ ९ ॥

**प्रत्यभिघार्य हविरवत्तं च ॥ १० ॥**

हविःशब्देन हविःशेष उच्यते । तस्य पूर्वं प्रत्यभिघारणं पश्चादवत्तस्य ॥ १० ॥

**एपोऽवदानधर्मः ॥ ११ ॥**

---

१. 'ध्वा अञ्जला इति प्राप्ते वध्वोऽञ्जला इ' क. प. पाठः २. 'ग्न्या', ३. 'ग्न्या' क ख. घ पाठ. ४ 'ग्न्यो' क ख. पाठः.

"अवदानसम्पदा जुहुयादि"त्यादिष्ववदानचोदनास्वेव धर्मः प्रत्येतव्यः — उपस्तरणं द्विस्त्रिश्चावदानं हविरवदानयोश्च प्रत्यभिघारणमिति । उपस्तरणाभिघारणयोर्वर एव कर्त्ता, लाजानां भ्राता । क्त्वाप्रत्ययस्त्वसत्यपि समानकर्तृकत्वे पूर्वकालतामात्रेऽपि प्रायेण कल्पसूत्रेषु प्रयुज्यते ॥ ११ ॥

**अर्यमणं नु देवं कन्या अग्निमयक्षत स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा । पूषणं नु देवं कन्या अग्निमयक्षत स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहेत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ॥ १२ ॥**

एतैस्त्रिभिर्मन्त्रैर्लाजान् जुहोति । कथम्, अञ्जलिमविच्छिन्दती अञ्जलेर्विच्छेदमकुर्वती वधूर्जुहुयात्, स्त्रीलिङ्गनिर्देशात् । मन्त्रास्तु वरस्यैव, स इमामिति मन्त्रलिङ्गात् । अन्यथा स मां देव इत्येव स्यात् । स्रुचेव, यथा स्रुचा हूयते एवमञ्जलिना जुहोति । कथं स्रुचा हूयते । द्रवेषु तावत् सर्वाणि द्रव्याणि स्रुङ्मुखेन जुहोति । अद्रवेषु तु "अपिदधदिव प्रदक्षिणं हुत्वे"ति कल्पान्तरम् । तस्मादिहाप्यपिदधदिव लाजान् जुहोति, न मुखेन ॥ १२ ॥

**अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम् ॥ १३ ॥**

'त्रिः परिणयन्नि'ति वचनाच्चतुर्थस्य परिणयनस्याप्राप्तिरेव । तथाप्यपरिणीयेत्युच्यते द्वितीयतृतीयावपि होमौ

१. 'स्रुव ज़ु' क. पाठः. २ 'ति लि' ख. पाठः. ३. 'यस्तथा', ४. 'न्ते त ए' क. पाठः. ५. 'वि' क. ग. पाठः.

परिणीय कर्तव्याविति ज्ञापनार्थम् । अन्यथा त्रीणि परिणयनान्यश्मारोहणान्तानि निरन्तराणि कृत्वा होमा अपि त्रयो निरन्तराः क्रियेरन्, तथोपदिष्टत्वात् । ततश्च प्रथम एव होमः परिणीय कृतः स्याद्, नेतरौ । अनेन तु प्रतिषेधेन सर्वेषामेव होमानां चतुर्थव्यतिरिक्तानां परिणीय क्रिया ज्ञापिता भवति । शूर्पपुटेन शूर्पकोणेन । अभ्यात्ममिति प्राक्चेष्टानिवृत्त्यर्थम् । मन्त्रानुपदेशादेव सिद्धे तूष्णींवचनं "प्रजापतिं मनसा ध्यायात् तूष्णींहोमेषु सर्वत्रे"त्यस्य प्राप्त्यर्थम् । उपदेशक्रमादेव सिद्धे चतुर्थवचनं लाजानां स्विष्टकृन्मा भूदिति । वधूरेव कर्त्री चतुर्थवचनादेव ॥ १३ ॥

ओप्योप्य हेके लाजान् परिणयन्ति ॥ १४ ॥

एके आचार्या लाजानोप्योप्य हुत्वा हुत्वा परिणयनं कर्तव्यमित्याहुरित्यर्थः । हशब्दोऽभिमतोऽयं पक्ष इति दर्शनार्थः ॥ १४ ॥

तथोत्तमे आहुती न सन्निपततः ॥ १५ ॥

तथा कर्तव्यम् । अस्मिन् पक्षे उत्तमयोराहुत्योः सन्निपातो न भवतीत्यर्थः । किमर्थमिदमिह । प्रागुक्तमपरिणीयेति । तदन्यार्थं सदिह दोषमावहति । तृतीयं परिणयनमकृत्वा चतुर्थो होमः कर्तव्य इति सिद्धं भवति अपरिणीय चतुर्थमिति वचनात् । अस्माद् वचनात् तृतीयं परिणयनं कृत्वा चतुर्थो होमः कर्तव्य इति सिद्धं भवति ॥ १५ ॥

अथास्यै शिखे विमुञ्चति यदि कृते भवतः ॥ १६ ॥

अथशब्दोऽनन्तरार्थः । तेन स्विष्टकृत उत्कर्षः । अस्यै

---

१. 'प्यौ' ग. पाठ. २. 'र' क पाठ.

अस्या इत्यर्थः । आत्मनिवृत्त्यर्थं चैतदुक्तम् । यदि कृते भवत इति ग्रामादिधर्माणामनियतत्वादुक्तम् ॥ १६ ॥

ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः ॥ १७ ॥

एवंलक्षणे ते शिखे, ययोर्विमोक उपदिष्टः । ऊर्णास्तुके ऊर्णासूत्रे । केशपक्षयोः केशसन्निवेशस्य दक्षिणोत्तरयोः पार्श्वयोः ॥ १७ ॥

प्र त्वा मुञ्चामि वरुणस्य पाशादिति ॥ १८ ॥

दक्षिणस्या ऊर्णास्तुकाया अयं मन्त्रः ॥ १८ ॥

उत्तरामुत्तरया ॥ १९ ॥

उत्तरामूर्णास्तुकामुत्तरयर्चा "प्रेतो मुञ्चामी"त्यनया विमुञ्चति ॥ १९ ॥

अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयतीष एकपदयूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपद्यृतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टय इति ॥ २० ॥

अथशब्दः पूर्ववत् । पूर्वोत्तरा दिगपराजिता । अन्यपेक्षया च सा गृह्यते । तस्यां दिशि एनां वधूं सप्त पदान्यभ्युत्क्रामयति प्रस्थापयति गमयति स्वयं दक्षिणे पादे गृहीत्वा निधापयति इष एकपदीत्यादिभिः सप्तभिर्मन्त्रैः । षण्णां साकाङ्क्षत्वात् सप्तमे समाम्नातं भवादि सर्वत्र सम्बध्यते । ऐतरेयिणां च वचनं —— "भवादि सर्वत्र समानमि"ति । ता एताः सप्तानुष्टुभः सम्पद्यन्ते ॥ २० ॥

**उभयोः सन्निधाय शिरसी उदकुम्भेनावसिच्य ब्राह्मण्या जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं प्रतिश्रयेत् ॥ २१ ॥**

उभयोर्दम्पत्योः शिरसी सन्निधाय सन्निधाप्य सन्निहिते कृत्वा पूर्वं स्थापितस्योदकुम्भस्योदकेनावसिञ्चति वरः। अवसिच्य सौविष्टकृतं हुत्वा या ब्राह्मणी जीवपतिका जीवप्रजा च भवति तस्या अगारे रात्रिमेतां प्रतिश्रयेत् । प्रतिश्रयो नाम परकीयगृहे वासः । अर्थप्राप्ते नियमविधिरयं यत् प्रतिश्रयेत् तदेवम्भूताया ब्राह्मण्या अगार इति । तेन यत्र तदहरेव स्वगृहप्रवेशः तत्रैतन्न भवति । बहुभार्यस्य पुरुषस्य काचिन्मृतप्रजापि स्त्री सम्भवति । तस्या अगारे मा भूत् प्रतिश्रयणमित्यतः स्त्री विशेष्यते ॥ २१ ॥

**ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नी प्रजां विन्देयेति ॥ २२ ॥**

इतिशब्दः प्रकारे । तेनान्येषामपि शुक्रादीनां यथासम्भवं दर्शनम् । अस्मिन् काले मन्त्रवद्वाग्विसर्गविधानाद् यतवाचा प्राग् भवितव्यम् । मन्त्रलिङ्गात् सवध्वा एव वाग्विसर्गः ॥ २२ ॥

इति हरदत्ताचार्यमिश्रकृतायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये पञ्चम खण्ड ।

---

अथ षष्ठः खण्डः ।

**प्रयाण उपपद्यमाने पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत् ॥ १ ॥**

प्रयाणे क्रियमाणे पूषा त्वेति वधूं यानं शकटादिकमारोहयेत् । यानेनैव नियतं प्रयाणं, नेत्याह—उपपद्यमान इति । यदि यानमुपपद्यते, तदानेन मन्त्रेणारोहणं कर्तव्यं, यदि नोपपद्यते प्रकारान्तरेणापि नयनं भवत्येव वध्वाः ॥ १ ॥

अश्मन्वतीरीयते संरभध्वमित्यर्धर्चेन नावमारोहयेत् ॥ २ ॥

अर्धर्चग्रहणमृङ्निवृत्त्यर्थम् ॥ २ ॥

उत्तरेणोत्क्रमयेत् ॥ ३ ॥

उत्तरेणार्धर्चेनोत्तारयेत । सर्वत्र वरस्यैव मन्त्रः ॥ ३ ॥

जीवं रुदन्तीति रुदत्याम् ॥ ४ ॥

यदा वधूर्बन्धुवियोगाद् रोदिति तदैतामृचं जपेत् ॥४॥

विवाहाग्निमग्रतोऽजस्रं नयन्ति ॥ ५ ॥

विवाहग्रहणादन्यस्याग्नेर्न भवति । अजस्रमिति ध्रियमाणस्य नयनं यथा स्यादिति । तेनान्यत्र समारोप्यापि नयनं भवति ॥ ५ ॥

कल्याणेषु देशवृक्षचतुष्पथेषु माविदन् परिपन्थिन इति जपेत् ॥ ६ ॥

कल्याणाः प्रशस्ताः, तेषु देशेषु वृक्षेषु चतुष्पथेषु 'माविदन्नि'त्यस्या ऋचो जपः कर्तव्यः ॥ ६ ॥

---

१. 'ण य' ख. पाठ　　२. 'व्यम् अथ तु नो'

वासे वासे सुमङ्गलीरियं वधूरितीक्षकानीक्षेत ॥ ७ ॥

वासे वास इति वचनात् पथि न भवति ॥ ७ ॥

इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत् ॥ ८ ॥

विवाहाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम् आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा समञ्जन्तु विश्वेदेवा इति दध्नः प्राश्य प्रतिप्रयच्छेत् ॥ ९ ॥

नयनेऽधिकृतत्वाद्धोमे यःकश्चिदग्निर्मा भूदिति विवाहाग्निग्रहणम्। उपसमाधायेति चर्मास्तरणस्य कालोपदेशार्थम्। पश्चादिति अग्नेः पश्चिमे देशे। आनडुहम् अनडुहो विकारं चर्म। प्राक् चास्य ग्रीवा उपरिष्टाच्च लोमानि भवन्ति। तस्मिन्नुपविष्टायां वध्वां समन्वारब्धवत्यां स्वयं चोपविश्य "आ नः प्रजामि"ति चतसृभिः प्रत्यृचं जुहोति। यत्र प्रत्यृचग्रहणं नास्ति तत्रापि प्रत्यृचमेव होमः "धाता ददातु दाशुष इति द्वाभ्यामि"त्यादौ, एकस्य कर्मणो बहुमन्त्रत्वमन्याय्यमिति कृत्वा। यथाहापस्तम्बः—"वचनादेकं कर्म बहुमन्त्रमि"ति। इह तु प्रत्यृचग्रहणमृगन्ते होमो यथा स्यात् स्वाहाकारो मा भूदिति। केचिदृगन्ते होमं कृत्वा पश्चात् स्वाहाकारं कुर्वन्ति। समञ्जन्त्विति दध्नः प्राश्य दध्न एकदेशं स्वयं प्राश्य तस्याः प्राशनार्थं प्रतिप्रयच्छेत् ॥ ९ ॥

आज्यशेषेण वानक्ति हृदये ॥ १० ॥

अथवा हुतशिष्टं यदाज्यमाज्यस्थाल्यां तेन हृदये द्वे आत्मनश्च वध्वाश्चानक्ति पूर्वेणैव मन्त्रेण। यथा—"द्यार्ययोर्देवीर्द्वारावि"त्यभिमर्शनमन्त्रः सकृत् प्रयुक्तः सन्नुभयार्थो भवति। एवमिहापि सकृदेव मन्त्रप्रयोगः, नाविति द्विवचनयोगात्। अन्ये त्वभ्यासमिच्छन्ति। ततः स्विष्टकृदादि ॥ १० ॥

अत ऊर्ध्वमक्षारालवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्याताम्। त्रिरात्रं द्वादशरात्रं संवत्सरं वैक ऋषिर्जायत इति ॥ ११ ॥

अतःशब्देनानन्तरस्य गृहप्रवेशनीयस्य निर्देशे प्राक्तने मार्गे व्रतचर्या न प्राप्नोति। अथ परमप्रकृतस्य विवाहस्य निर्देशः एवमपि यस्य दूरे विवाहः तस्य प्रागेव गृहप्रवेशनीयान्मार्ग एव व्रतसमाप्तिः प्राप्नोति। तस्माद् योगद्वयमेतद् व्याख्येयम्। विवाहप्रभृत्यक्षारालवणाशिनौ *ब्रह्मचारिणौ स्यातामित्येको योगः। ततो गृहप्रवेशनीयादूर्ध्वं* त्रिरात्रं द्वादशरात्रं संवत्सरं वेति द्वितीयः। एक ऋषिर्जायत इति। एवं नियमयुक्तस्य ऋषिकल्पः पुत्रो जायत इत्यर्थः ॥ ११ ॥

चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात् ॥ १२ ॥

एवमन्यतमेन कल्पेन चरितव्रतः सन् सूर्याविदे "सत्येनोत्तभिते"त्यारभ्याध्यायपरिसमाप्तेर्ये मन्त्राः ते सूर्या

दृष्टाः सूर्याशब्देनोच्यन्ते । यथा 'वृषाकपिरप्रतिरथ' इति । तान् मन्त्रान् पदशोऽक्षरशः स्वरशोऽर्थतश्च यो वेत्ति, तस्मै सूर्याविदे । वधूवस्त्रं विवाहकाले यत् तया परिहितं वासः तद्, दद्यात् ॥ १२ ॥

**अन्नं ब्राह्मणेभ्यः ॥ १३ ॥**

दद्यादित्येव ॥ १३ ॥

**अथ स्वस्त्ययनं वाचयीत ॥ १४ ॥**

अथ तैर्भुक्तवद्भिः स्वस्त्ययनं वाचयेत् । स्वस्त्ययनमस्त्विति वाचयेदित्यर्थ इति केचित् । पुण्याहवाचनोपलक्षणमित्यन्ये । तच्चरणभेदेन देशभेदेन च भिद्यते । ततस्तस्या रात्रौ पुण्ये मुहूर्ते समावेशनम् ॥ १४ ॥

इति हरदत्ताचार्यमिश्रकृतायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

**पाणिग्रहणादि गृह्यं परिचरेत् स्वयं पत्न्यपिवा पुत्रः कुमार्यन्तेवासी वा ॥ १ ॥**

यस्मिन् कर्मणि पाणिर्गृह्यते तत् पाणिग्रहणं विवाहः, तत आरभ्य गृह्यमग्निं परिचरेत् । परिचरणं शुश्रूषा, समिन्धनादिः । होमश्च पत्नीकुमारीव्यतिरिक्तानाम् । तयोस्तु संमार्जनमुपलेपनं हविरुपकल्पनं समिन्धनमित्यादि । पुत्रस्याप्युपनीतस्य ग्रहणम् । तथापस्तम्बः— 'स्त्रियानुपेतेन क्षारलवणावरान्नसंसृष्टस्य च होमं परिचक्षते' इति । अन्ये तु होममपि सर्वेषामिच्छन्ति । तथाचच्छन्दोगाः — 'पत्नी

जुहुयादित्येके गृहाः पत्नी गृह्योऽग्निरेष' इति। तत्र स्वयमिति मुख्यः कल्पः। इतरे क्रमेणाभावे विधयः। पाणिग्रहणादिवचनं गृहप्रवेशनीयादूर्ध्वं मा भूदिति। सायमुपक्रमश्च परिचरणम् ॥ १ ॥

**नित्यानुगृहीतः स्यात् ॥ २ ॥**

अनुशब्दः परेरर्थे। अयमग्निर्नित्यपरिगृहीतः स्याद् यजमानेन पत्न्या वा। अन्यतरोऽवश्यमग्निसमीपे तिष्ठेत्। नोभौ सह प्रवसेतामित्यर्थः। उदयास्तमययोश्चायं नियमः। अन्ये तु नित्यं धार्य इत्यर्थमाहुः ॥ २ ॥

**यदि तूपशाम्येत् पत्न्युपवसेदित्येके ॥ ३ ॥**

यदि खल्वग्निरुपशाम्येत् पत्न्या उपवासः स्यादित्येके मन्यन्ते। अन्ये यजमानस्य। उभयोरपरे। अत्राग्न्युत्पत्तिप्रकारानुपदेशात् कल्पान्तरमपेक्ष्यम्। तत्रापस्तम्बः — 'नित्यः धार्यः। अनुगतो मन्थ्यः। श्रोत्रियागाराद् वाहार्यः। उपवासश्चान्यतरस्य भार्यायाः पत्युर्वा। अनुगतेऽपि चोत्तरया जुहुयान्नोपवसेदि'ति। उत्तरया 'अयाश्चाग्न' इत्येतया। सर्वत्राग्न्युत्पत्तिरेवैव ॥ ३ ॥

**तस्याग्निहोत्रेण ॥ ४ ॥**

विधिरिति शेषः। तस्य गृह्यस्याग्नेरग्निहोत्रेण विधिर्व्याख्यातः। तत्र पाकयज्ञतन्त्रं न भवति, होम्यधर्मास्तु भवन्तीति प्रागेवोक्तम् ॥ ४ ॥

---

१. 'ह देशान्तरं गच्छेता' घ. पाठ.

अग्निहोत्रधर्माणा सर्वेषा प्रसङ्गे परिसङ्ख्ये —

**प्रादुष्करणहोमकालौ व्याख्यातौ ॥ ५ ॥**

प्रादुष्करणं प्रज्वलनं 'अपराह्ले गार्हपत्यं प्रज्वाल्य' इति पूर्वोक्तं, प्रदोपान्तो होमकालः सङ्गवान्तः प्रातरिति[1] च ॥ ५ ॥

**होम्यं च मांसवर्जम् ॥ ६ ॥**

होमार्हं द्रव्यं होम्यं, तदप्यग्निहोत्रेण व्याख्यातम् । मांसवर्जं मांसं वर्जयित्वा । मांसप्रतिषेधाद् विज्ञायते शाखान्तरविहितान्यपि द्रव्याणि गृह्यन्त इति ।

"पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः ।
सोममांसं तथा तैलमापस्तानि दशैव तु ॥"

इति ॥ ६ ॥

**कामं तु व्रीहियवतिलैः ॥ ७ ॥**

कामं त्विति पूर्वोक्तद्रव्यालाभे व्रीह्यादीनां प्राप्त्यर्थम् । अतो व्रीहियवतिलैर्वेति न सूत्रितम् । तैश्च व्यस्तैर्होमः, न समस्तैः ॥ ७ ॥

**अग्नये स्वाहेति सायं जुहुयात् सूर्याय स्वाहेति प्रातस्तूष्णीं द्वितीये उभयत्र ॥ ८ ॥**

उभयत्र सायं प्रातश्च द्वितीये आहुती तूष्णीं जुहुयात् । मन्त्रानुपदेशादेव सिद्धे तूष्णीमिति प्रजापतिध्यानार्थम् ॥ ८ ॥

इति हरदत्ताचार्यमिश्रकृतायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये सप्तम खण्ड ।

---

१ 'ति ॥' घ पाठ ।

क्रमेण निर्वापः कृतः, तेन क्रमेण अग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति। केचिदाहुः — तस्यै तस्यै चतुरश्चतुरः पवित्रे अन्तर्धायेति। सर्वोऽयं विधिर्यथानिरुप्तमित्यनेनातिदिश्यत इति ॥ ८ ॥

**अवहतांस्त्रिः फलीकृतान् नाना श्रपयेत् ॥ ९ ॥**

अवहननं तुषविमोचनम्। फलीकरणं कणविमोचनम्। प्रक्षालनमपि त्रिर्भवति आचारात्। नानेति पृथक्पात्रेषु श्रपयेदित्यर्थः ॥ ९ ॥

**समोप्य वा ॥ १० ॥**

एकस्मिन्[१] पात्रे समावापं कृत्वा[२] वा श्रपयेत् ॥ १० ॥

नानाश्रपणे विशेषमाह —

**यदि नाना श्रपयेद् विभज्य तण्डुलानभिमृशेदिदममुष्मा इदममुष्मा इति ॥ ११ ॥**

यदा नाना श्रपणं तदा तण्डुलान् विभज्य पृथक् कृत्वाभिमृशेद् दक्षिणेन हस्तेन इदमग्नये इदमग्नीषोमाभ्यामिति ॥ ११ ॥

समोप्यपक्षे विशेषमाह —

**यद्यु वै समोप्य व्युद्धारं जुहुयात् ॥ १२ ॥**

यद्युवै इति निपातौ वाक्यालङ्कारे। यदि समावापं कृत्वा श्रपयेत्, तदा व्युद्धारं व्युद्धृत्य नानापात्रे कृत्वा पूर्व-

---

१. 'द॥', २. 'न् वा पा', ३. 'त्वा श्र' ख. पाठः.

वदभिमृश्य जुहुयात् । जुहुयादिति वचनं होमकाले व्युद्धारो यथा स्यादिति ॥ १२ ॥

शृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्येध्ममभिघार्यायं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेति ॥ १३ ॥

आदध्यादिति शेषः, वक्ष्यमाणं वापेक्ष्यते । शृतानीति वचनान्नाशृतानि नापि विदग्धानि । उदगुद्वास्येति पाठः । उदङ्ङिति पाठे कर्तुरुदङ्मुखत्वं प्राप्नोति । बर्हिष्यासाद्य[1] अस्मादेवानुवादाद् गम्यते अस्ति बर्हिःस्तरणमिति । तच्च पश्चादग्नेः । प्रादेशमात्रं बर्हिरिच्छन्ति । तस्मिन् हविरासाद्य । कल्पान्तरदर्शनात् प्रतिष्ठितमभिघारयति । खादिरः पालाशो वा एकविंशतिदारुरिध्मः त्रयः परिधयः स्थविष्ठो मध्यमः अणीयान् द्राघीयान् दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्योऽरत्निमात्रे द्वे आघारसमिधावनूयाजसमिदेका । पञ्चदश होमार्थाः । मध्यमं परिधिमुपस्पृश्योर्ध्वे आघारसमिधावादधाति दक्षिणार्धपूर्वार्धे उत्तरार्धपूर्वार्धे च । ततः पञ्चदशसमिधो युगपद्[4]दादधाति अयं त इति स्वाहान्तेन ॥ १३ ॥

१. 'अन्यथा चेत् कर्तुरुदङ्मुखत्वप्राप्तिः । प' क. ख. पाठः. २. 'ति । प' ग. पाठः. ३. 'ग्ने. । बर्हिश्च प्रादेशमात्रम् । आसन्नान्यभिघारयति प्रतिष्ठितमभिघारयति । न । कल्पान्तरदर्शनात् । तत इध्ममभिघारयति । खा' क. ख. पाठः. ४. 'द् जुहोति । तत्र मन्त्रः अयं त इध्म इति ॥' ग. घ. पाठः.

अथाष्टमः खण्डः ।

**अथ पार्वणः स्थालीपाकः ॥ १ ॥**

अथशब्दोऽधिकारार्थः । पक्षसन्धिः पर्व तत्र कर्तव्यः पार्वणः । स्थाल्यां पच्यत इति स्थालीपाकः । इह तु तद्धविष्कं कर्म विवक्षितम् । पार्वणग्रहणं कालविधानार्थम् । अन्यथा पाणिग्रहणादिवचनादहरहः क्रियां प्राप्नोति ॥ १ ॥

**तस्य दर्शपूर्णमासाभ्यामुपवासः ॥ २ ॥**

तस्य पार्वणस्य । दर्शपूर्णमासाभ्यामुपवासो व्याख्यातः । उपवासशब्दोऽयमभोजने प्रसिद्धः । इह तु रात्रावभोजने द्रष्टव्यः । 'न तस्य सायमश्नीयाद् येन प्रातर्यक्ष्यमाणः स्याद्' इत्यापस्तम्बः । प्रकृतत्वादेव सिद्धे तस्येति वचनं नियमार्थम् । तस्यैव पार्वणस्यायमुपवासविधिः स्यात्, तदतिदिष्टे मा भूदिति ॥ २ ॥

**इध्माबर्हिषोश्च सन्नहनम् ॥ ३ ॥**

सन्नहनं बन्धनं, तच्च दर्शपूर्णमासाभ्यां व्याख्यातम् । समन्त्रकममन्त्रकं वा शास्त्रान्तरे दृष्टं पूर्वेद्युरिति ॥

**देवताश्चोपांशुयाजेन्द्रमहेन्द्रवर्जम् ॥ ४ ॥**

देवताश्च दर्शपूर्णमासाभ्यां व्याख्याताः । किमविशेषेण । नेत्याह — उपांशुयाजेन्द्रमहेन्द्रवर्जम्, उपांशुदेवतामिन्द्रं महेन्द्रं च वर्जयित्वा । तेन पौर्णमास्यामग्निरग्नीषोमौ च अमावास्यायामग्निरिन्द्राग्नी च ॥ ४ ॥

---

१. 'हः प्रा' ख. ग. पाठः. २. 'यां' ख. ग. घ. पाठः. ३. 'द्युः ॥' घ. पाठः.

**काम्या इतराः ॥ ५ ॥**

उक्ताभ्योऽन्या उपांशुयाजाद्या देवताः काम्या भवन्ति, कामे सति कर्तव्या इत्यर्थः । 'विष्णुं बुभूषन् यजेते'त्यादयः काम्याः । 'अथ काम्यानां स्थाने काम्याश्चरव' इत्येव सिद्धे वचनमिदं कामसंयोगेन पर्वणि कथं प्रयोगः समानतन्त्रः स्यादिति । आज्येन चोपांशुमिच्छन्ति । अपर आह — पूर्वो योगः प्रधानदेवताविषयः । यास्त्वितरा अङ्गदेवताः, ता अपि काम्याश्चेत् कर्तव्या एव ।'अथ प्रजाकामो राकां सिनीवालीं कुहूमि'ति ॥ ५ ॥

**तस्यै तस्यै देवतायै चतुरश्चतुरो मुष्टीन् निर्वपति ॥ ६ ॥**

यस्मिन् यस्मिन् कर्मणि या या देवता चोद्यते तस्यै तस्यै । मुष्टिरिति परिमाणोपदेशः ॥ ६ ॥

**पवित्रे अन्तर्धायामुष्मै त्वा जुष्टं निर्वपामीति ॥७॥**

पवित्रे प्रागुक्ते । ते अन्तर्धाय मध्ये कृत्वा अमुष्मै त्वा जुष्टं निर्वपामीत्यनेन मन्त्रेण निर्वपति । तत्रामुष्मा इत्यस्य स्थाने देवतापदं चतुर्थ्यन्तं प्रयोक्तव्यम् — अग्नये त्वा अग्नीषोमाभ्यां त्वा इन्द्राग्निभ्यां त्वेति ॥ ७ ॥

**अथैनान् प्रोक्षति यथानिरुप्तममुष्मै त्वा जुष्टं प्रोक्षामीति ॥ ८ ॥**

अथशब्द आनन्तर्यार्थः । तेन सर्वेषु निरुप्तेषु निर्वापपदे समाप्तेऽनन्तरं प्रोक्षणम् । यथानिरुप्तमिति येन

---

१. 'मा.' क. ख. घ. पाठ, २. 'श्चोद्यन्ते त' ग. पाठ., ३. 'र्स ये' ख. पाठः,

तूष्णीमाघारावाघार्याज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहेति ॥ १४ ॥

मन्त्रानुपदेशादेव सिद्धे तूष्णीमिति वचनाद् दर्शपूर्णमासयोर्मन्त्रव्यतिरिक्ता ये आघारधर्मास्ते भवन्ति । तेन पूर्वमाघारं स्रुवेण जुहोति । उत्तरं परिधिसन्धिमन्ववहृत्य प्रजापतिं मनसा ध्यायन् उत्तरं तु दक्षिणं परिधिसन्धिमन्ववहृत्य जुहुयाद् इन्द्रं मनसा ध्यायन् । स्थानाभिप्राणने तु न भवतः कल्पान्तरे क्वचिदप्यदर्शनाद्, 'आसीनो दर्वीहोमाञ्जुहोती'ति वचनाच्च । आज्यभागावित्युत्तरयोराहुत्योः संज्ञा । प्रयोजनं 'तथाज्यभागौ पाकयज्ञेष्वि'ति । उत्तरमाग्नेयं दक्षिणं सौम्यमिति वक्ष्यमाणत्वादमुष्मै स्वाहेति परिभाषयैव सिद्धे मन्त्रोपदेशः क्रमार्थः पूर्वमाग्नेयः पश्चात् सौम्य इति ॥ १४ ॥

उत्तरमाग्नेयं दक्षिणं सौम्यम् ॥ १५ ॥

अनयोरेष देशविधिः । अग्नेरुत्तरपार्श्वे होतव्यत्वादुत्तरः एवं दक्षिणः ॥ १५ ॥

तयोरेवंदेशत्वे कारणमाह —

विज्ञायते चक्षुषी वा एते यज्ञस्य यदाज्यभागौ तस्मात् पुरुषस्य प्रत्यङ्मुखस्यासीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम् ॥ १६ ॥

---

१. 'याद् उ' ग. पाठ.. २. 'स्व' ख. पाठः ३ 'ज्ञा । 'त', ४. 'गाविति प्रयोजनम् ॥' क. ख. पाठ. ५. 'ति जुहुयादिति प' ग. घ. पाठः. ६. 'ति । तयोर्देशविधिः । उ', ७. 'म् । अग्ने' ग. घ. पाठ..

आज्यभागौ नाम यदेते यज्ञाख्यस्य पुरुषस्य चक्षुषी, तस्मादेवंदेशौ। अत एव हि यदा पुरुषः प्रत्यङ्मुख आसीनो भवति, तदा दक्षिणमप्युत्तरं भवति आग्नेयं[1] चैतदुत्तरम्। सव्यं दक्षिणादिग्भागगतं भवति सौम्यं[2] चैतत्। तस्मादेवंदेशाविति। उत्तरमाग्नेयं दक्षिणं सौम्यमिति वचनादेवैवंदेशत्वे सिद्धे ब्राह्मणवाक्यमनुकृष्यते[3]—दक्षिणापवर्गेऽप्येवमेतौ होतव्याविति। तेनान्यत्रैवंजातीयके उदगपवर्गता[4] भवति[5] ॥ १६ ॥

मध्ये हवींषि ॥ १७ ॥

जुहुयादित्येव। सन्निधानादाज्यभागयोर्मध्ये प्रधानाहुतिं जुहुयात् ॥ १७ ॥

प्रत्यक्तरं वा ॥ १८ ॥

आज्यभागयोरेव प्रत्यक्तरं पश्चिमतरं वा प्रधानाहुतिं जुहुयात् ॥ १८ ॥

प्राक्संस्थान्युदक्संस्थानि वा ॥ १९ ॥

हवींषि जुहुयादित्येव, मध्ये हवींषीति वचनात्। उपर्युपरि होमे प्राप्ते वचनम् ॥ १९ ॥

उत्तरपुरस्तात् सौविष्टकृतम् ॥ २० ॥

उत्तरपूर्वे भागे अग्नावेव स्विष्टकृद्देवत्यामाहुतिं जुहुयात् ॥ २० ॥

मध्यात् पूर्वार्धाच्च हविषोऽवद्यति ॥ २१ ॥

हविषो मध्याच्च पूर्वार्धाच्चावद्यति, उपस्तरणाभिघारणे द्वे, एवं चतुरवत्तम् ॥ २१ ॥

---

१, २. 'च', ३ 'वक्ष्यते' क. ख. पाठः. ४. 'र्गो भ', ५. 'तीति ॥' घ. पाठः.

**मध्यात् पूर्वार्धात् पश्चार्धादिति पञ्चावत्तिनाम् ॥ २२ ॥**

पञ्चावत्तिनो जमदग्नयः, तेषामयमवदानक्रमः। पश्चार्धाच्चेत्येतावत्युक्ते[1] 'तस्य नित्याः प्राञ्चश्चेष्टा' इति[2] प्राक्संस्थता प्राप्नोति। तस्मात् क्रमार्थं गुरुसूत्रकरणम् ॥ २२ ॥

**उत्तरार्धात् सौविष्टकृतम् ॥ २३ ॥**

सौविष्टकृतमवदानं हविष उत्तरार्धादवद्यति। एकवचनस्याविवक्षितत्वात् पञ्चावत्तिनो द्विरवदानम्। अभिघारणं तु सर्वेषां द्विर्भवति। एवमवदानसंपत्तिर्भवति। आपस्तम्बोऽप्याह—'सर्वेषां हविषामुत्तरार्धात् सकृत् सकृत् स्विष्टकृतेऽवद्यति। द्विःपञ्चावत्तिनो दैवतसौविष्टकृतैडचतुर्धाकरणिकानामुत्तरमुत्तरं ज्यायो द्विरभिघार्ये'ति ॥ २३ ॥

**नात्र हवींषि प्रत्यभिघारयति। स्विष्टकृतं द्विरभिघारयति ॥ २४ ॥**

अत्र स्विष्टकृदवदाने हवींषि न प्रत्यभिघारयति। अत्रग्रहणेऽक्रियमाणे प्रधानावदाने प्रत्यभिघारणं[3] न स्यात् ॥ २४ ॥

**यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद् विद्यात् सर्वं स्विष्टं सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्द्धयित्रे सर्वान्नः कामान् समर्द्धय स्वाहा इति ॥ २५ ॥**

सौविष्टकृतस्यायं[4] मन्त्रः ॥ २५ ॥

---

१. 'च्यमाने त', २. 'ति वचनात् प्रा' ग. घ. पाठः. ३. 'भिघारणेऽपि प्र' घ. पाठ. ४. 'स्य होमस्यायं 'ख. पाठः. ५. 'यं होमम- ग, घ. पाठः.

बर्हिषि पूर्णपात्रं निनयेत् ॥ २६॥

यदपां पूर्णं प्रणीतापात्रं तद् हविरासादनार्थे स्तीर्णे बर्हिषि निनयेत् निषिञ्चेत् । अस्मादेव प्रतिपत्तिविधानाद् गम्यते अस्ति पाकयज्ञेषु प्रणीताप्रणयनमिति । तत्र पात्रे प्रोक्षणानन्तरमापस्तम्बः — 'अपरेणाग्निं पवित्रान्तर्हिते पात्रेऽप आनीयोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूय समं प्राणै-र्हृत्वोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्ये'ति ॥ २६ ॥

एषोऽवभृथः पाकयज्ञानाम् ॥ २७ ॥

यदिदं पूर्णपात्रनिनयनमेष पाकयज्ञानामवभृथो वेदितव्यः। अनवभृथेऽवभृथवचनम् अवभृथधर्मा यथा स्युरिति। के पुनस्ते। कालश्चाभ्युक्षणं च। कः पुनरवभृथस्य कालः। ऊर्ध्वं सर्वप्रायश्चित्तेभ्यः प्राक् संस्थाजपात्। अभ्युक्षणं च भवति। कर्तुः संस्कार्यस्य चोपनयनादौ प्रतिदिशमुक्षणं चाचरन्ति। पाकयज्ञानामित्यनुच्यमाने प्रकरणात् स्थालीपाकेष्वेव स्यात्। पाकयज्ञग्रहणात्तु सर्वेषु पाकयज्ञेषु भवति। सर्वप्रायश्चित्तानि च ब्रह्मण इति केचित्। अन्ये त्वनित्यत्वाद् ब्रह्मणः प्रायश्चित्तस्यावश्यंभावित्वात् कर्तुरिति ॥ २७ ॥

एतत् तन्त्रम् ॥ २८॥

पाकयज्ञानामित्युभयत्रापि सम्बध्यते। पुरस्ताच्चोपरिष्टाच्च यदङ्गजातं तत्तन्त्रम् ॥ २८ ॥

---

१. 'अनभ्यु', २. 'ति स्थिनम् ॥' घ. पाठः.

**हविरुच्छिष्टं दक्षिणा ॥ २९ ॥**

हविषो यद्धुतशिष्टं, सा दक्षिणा । अस्मादेव दक्षिणाविधानादन्यः कर्तेति गम्यते । तन्त्रव्यपदेशे कृते सत्युत्तरकालविधानाद् दक्षिणायाः पूर्वसूत्रेषु सर्वेषु पाकयज्ञेषु प्रवृत्तिर्न भवति, किं तर्हि पार्वण एव स्थालीपाके । सर्वेषु स्थालीपाकेष्वित्यन्ये ॥ २९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये अष्टमः खण्डः ।

---

अथ नवमः खण्डः ।

**अथ पशुकल्पः ॥ १ ॥**

अथशब्दोऽधिकारार्थः । इत उत्तरं पशुकल्पोऽधिकृतो वेदितव्यः । कल्पग्रहणं किमर्थम् । अथ पशुरित्युच्यमाने योऽयं त्रेतायां पशुर्विहितः स षाण्मास्यः सांवत्सरो वेति, तस्य स्थाने गृह्येऽग्नौ पशुर्विधीयत इति विज्ञायते । कल्पग्रहणात्तु योऽस्मिन् गृह्येऽन्यत्र चोदितः पशुरष्टकायां शूलगवे आतिथ्ये मधुपर्के, अथ काम्यानां स्थाने काम्या इत्यत्र च, तस्य पशोः कल्पमात्रमत्र विधीयत इत्यर्थो भवति ॥ १ ॥

**उत्तरतोऽग्नेः शामित्रस्यायतनं कृत्वा पाययित्वा पशुमाप्लाव्य पुरस्तात् प्रत्यङ्मुखमवस्थाप्याग्निं दूतमिति द्वाभ्यां हुत्वा सपलाशयार्द्रशाखया पश्चादुपस्पृशेदमुष्मै त्वा जुष्टमुपाकरोमीति ॥ २ ॥**

यस्मिन्नग्नौ पशुः श्रप्यते स शामित्रः । तस्यायतनं करोति । क । उत्तरतोऽग्नेरौपासनस्य कृत्वायतनं पशुं पाययति उदकपानं कारयति । पाययित्वा तत आप्लावयति स्नापयति । ततोऽग्नेः पुरस्तात् प्रत्यङ्मुखमवस्थापयति । ततोऽग्निं दूतमिति द्वाभ्यां हुत्वा सपलाशया सपर्णयार्द्रशाखया अशुष्कशाखया पश्चात् पृष्ठभागे पशुमुपस्पृशेद् अन्वारभेत अमुष्मै त्वेति मन्त्रेण । अदःशब्दस्य स्थाने देवतानिर्देशश्चतुर्थ्या । 'अग्निं दूतं वृणीमहे' 'अग्निं दूतं पुरो दधे' 'अग्निं दूतं प्रति यदब्रवीत ने'त्यनेकसम्भवेऽप्याद्यस्य ग्रहणं हीनपादग्रहणात् । सूक्तादौ हीनपादग्रहणं दृष्टम् । यद्येवं द्वाभ्यां सूक्ताभ्यां होमः प्राप्नोति । भविष्यति । यत्र सूक्तादिग्रहणेनैकं सूक्तमिच्छति, करोति तत्र यत्नम् । तद्यथा— 'उपप्रयन्त' इति सूक्ते 'इमे विप्रस्ये'ति सूक्ते इति । तस्माद्वाभ्यां द्वाभ्यां होमः ॥ २ ॥

व्रीहियवमतीभिरद्भिः पुरस्तात् प्रोक्षत्यमुष्मै त्वा जुष्टं प्रोक्षामीति ॥ ३ ॥

व्रीहीन् यवांश्चाप्सु प्रक्षिप्य ताभिरद्भिः पुरस्तादग्रतः प्रोक्षति मन्त्रेणोद्दिष्टदेवतेन ॥ ३ ॥

---

१. 'शामित्रो नामाग्निः यस्मिन् पशु श्रप्यते । तस्या' ग. घ. पाठः. २. 'तन्त्रगं प' क. पाठः. ३. 'यित्वा उ' ग. पाठः ४. 'ति पानीयं तत्राप्ला' ख. पाठः. ५. 'त्वा पशुमाप्ला' ग. पाठः. ६. 'ति । अवस्थाप्य ततोऽग्निं', ७. भ्या जुहोति । हु' ग. घ. पाठः. ८. 'प्यन्यस्याम' घ. पाठः. ९. 'ति अमुष्मै त्वा जुष्टं प्रोक्षामीत्यनेन मन्त्रेण । नामनिर्देशः पूर्ववत् ॥' क. ख. पाठः.

तासां पाययित्वा दक्षिणमनु बाहुं शेषं निनयेत् ॥ ४ ॥

तासामपां किञ्चित् पाययित्वा तस्य पशोर्दक्षिणं बाहुमनु दक्षिणे बाहौ निनयेत्- निषिञ्चेत् । तासामित्यक्रियमाणे प्रोक्षणावशिष्टानामपां पायनं स्यात् । प्रोक्षणाभावे न स्यात् । तासांग्रहणात्तु प्रोक्षणाभावेऽपि- 'प्रोक्षणोपाकरणवर्जमि'त्यत्रापि पायनं स्यात् । केचित्तु असति तासांग्रहणे यासां कासाञ्चिदपां पायनं स्यात् । तच्छेपस्य निनयनम् । तासांग्रहणं तु प्रोक्षणावशिष्टानामेव पायनं निनयनं चेति । नेति वयम् । यद्येतदस्य प्रयोजनं शेषग्रहणमेव पुरस्तात् कर्तव्यं शेषं पाययित्वेति ॥ ४ ॥

आवृतैव पर्यग्निकृत्वोदञ्चं नयन्ति ॥ ५ ॥

समन्त्रकेऽनुष्ठानप्रकारेऽन्यत्र विहिते तस्यैव मन्त्रवर्जितस्य वचनमावृदिति । तेन श्रौते पशौ यः पर्यग्निकरणप्रकारः तेनैव मन्त्रवर्जं पर्यग्नि करोति । केन कथम्, आहवनीयादुल्मुकमादायाग्नीध्रः परिवाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति । पशुं यूपमाहवनीयं शामित्रदेशं चात्वालमाज्यानि चेत्येके । 'प्रत्यपिसृज्योल्मुकं त्रिः प्रतिपर्येती'त्यापस्तम्बः । एवं पर्यग्नि कृत्वा पशुमुदञ्चं नयन्ति यजमानस्य पुरुषाः ॥ ५ ॥

---

१. 'पां शेषं कि', २. 'सांग्रहणेऽकि', ३. 'नं भवति । अपर आह अ', ४. 'णात् तु', ५. 'न्त्रस्याव' क. ख. पाठः

तस्य पुरस्तादुल्मुकं हरन्ति ॥ ६ ॥

तस्य नीयमानस्य पशोः पुरस्तात् अग्रतः उल्मुकं दीप्ताग्रं काष्ठम् । हरन्ति त एव । तस्येति वचनात् पुरस्ताच्छब्दोऽग्रवाची, अन्यथा प्रथमवाची दिग्वाची वा सम्भाव्यते ॥ ६ ॥

शामित्र एष भवति ॥ ७ ॥

एष उल्मुकाग्निः शामित्रो भवति । तस्मिन्नायतने तस्य प्रतिष्ठापनम् ॥ ७ ॥

वपाश्रपणीभ्यां कर्ता पशुमन्वारभते ॥ ८ ॥

कार्ष्मर्यमय्यौ वपाश्रपण्यौ 'द्विशूलामेकशूलां चे'ति शास्त्रान्तरे । तयोरिह ग्रहणं प्रसिद्धवदुपदेशात् । ताभ्याम् । कर्ता पशुमन्वारभते । कः पुनः कर्ता, यः कश्चित् समर्थः । अध्वर्युरित्यन्ये ॥ ८ ॥

कर्तारं यजमानः ॥ ९ ॥

अन्वारभत इत्येव ॥ ९ ॥

पश्चाच्छामित्रस्य प्राक्छिरसं प्रत्यक्छिरसं वोदक्पादं संज्ञप्य पुरा नाभेस्तृणमन्तर्धाय वपामुत्खिद्य वपामवदाय वपाश्रपणीभ्यां परिगृह्याद्भिरवसिच्य शामित्रे प्रताप्याग्रेणैतमग्निं हृत्वा दक्षिणत आसीनः श्रपयित्वा परीत्य जुहुयात् ॥ १० ॥

१. 'ष्ठम', २. 'ण्यौ एका विशाखा अपरा सशाखेति' शा- क, ख. पाठः

शामित्रस्य पश्चिमे देशे बर्हिरास्तीर्य तत्र पशुं संज्ञपयति मारयति कर्ता। 'अमायुं कृण्वन्तमि'ति कल्पान्तरे। संज्ञपनकाले च प्राक्छिरा वा प्रत्यक्छिरा वा पशुः कार्यः। ऊर्ध्वशिरा वा माभूदित्येवमर्थमिदम्, उदक्पादवचनादेव सिद्धत्वात्। एवं संज्ञप्य पुरा नाभेरिति वपास्थाननिर्देशः। नाभेरर्वागित्यर्थः। तृणमन्तर्धाय वपामुत्खिदति। उत्खिद्य उत्पाट्य वपामवद्यति खण्डयति। पुनर्वपाग्रहणं कृत्स्नावदानार्थम्। तेन हृदयादिष्वेकदेशावदानं भवति। अवदाय वपाश्रपणीभ्यां परिगृह्णाति। परिगृह्याद्भिरवसिञ्चति क्षालयति। अवसिच्य शामित्रेऽग्नौ प्रतापयति। धर्ममात्रमिदं प्रतापनम्, उत्तरत्र वपाश्रपणविधानात्। प्रताप्याग्रेणैतमग्निं हृत्वा अग्रेण पूर्वेणेत्यर्थः। एतमग्निमित्यौपासनस्य निर्देशः प्रधानत्वात्, इतरस्य शामित्रशब्देनैव सर्वत्र व्यवहारात्, हृत्वा तस्यैवाग्नेर्दक्षिणत आसीनः श्रपयति घृतपरिषेकश्च भवति सम्यक्पाकार्थम्। श्रपयित्वा परीत्य जुहुयात्। उभावप्यग्नी पर्यावर्तेते। अमुष्मै स्वाहेति मन्त्रः। अत्र प्रधानहोमविधानादाज्यभागान्ते पाशुकस्य कर्मण आरम्भः कुम्भीस्त्रधित्यादीनां च पात्रैः सह सादनम्॥ १०॥

एतस्मिन्नेवाग्नौ स्थालीपाकं श्रपयन्ति॥ ११॥

एतस्मिन्निति श्रपणार्थमुत्पन्ने शामित्रे माभूत्। पशुपुरोडाशस्थानीयश्चायं स्थालीपाकः। यद्देवत्यः पशुः तद्देवतो भवति॥ ११॥

---

१. 'ति। ततोऽद्भिरवसिच्य प्रताप्य शा', २. 'त्र श' क. ख. पाठः. ३. 'कर्म' ग. पाठः.

एकादश पशोरवदानानि ॥ १२ ॥

पश्वधिकारे पुनः पशुग्रहणं श्रौतपरिग्रहार्थम्। श्रौतस्य पशोर्यान्यवदानानि तान्यत्र ग्राह्याणीति। तानि च कल्पान्तरादागमयितव्यानि[1]। तत्रापस्तम्बः—'हृदयं जिह्वा वक्षो यकृद्वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि'॥ १२॥

सर्वाङ्गेभ्योऽवदाय शामित्रे श्रपयित्वा हृदयं शूले प्रताप्य स्थालीपाकस्याग्रतो जुहुयात् ॥ १३ ॥

इदं विप्रतिषिद्धं यद्येकादशावदानानि[2] सर्वाङ्गेभ्योऽवदाय[3] कथमेकादशावदानानीति[4]। नास्ति विप्रतिषेधः। नेदं होमार्थमवदानं चोद्यते, तस्य वक्ष्यमाणत्वात् 'एकैकस्यावदानस्य द्विर्द्विरवद्यती'ति। किं तर्ह्यनेनोच्यते। यद्यप्येकादशावदानानि, तथापि सर्वाण्येवखण्डय शामित्रे श्रपयितव्यानीति। तानि च 'दक्षिणं दोः सव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि। क्लोमानं प्लीहानं पुरीततं वनिष्ठुमध्युध्निं मेदो जाघनीमि'त्यापस्तम्बोक्तानि। तेन च सौविष्टकृतानामत्रापि स्विष्टकृत्येव विनियोगः इतरेषां हुतशिष्टानां च ब्राह्मणभोजनादावि[6]ति। तत्र सर्वाङ्गेभ्य इति द्वितीयार्थे पञ्चमी। हृदयं शूले प्रताप्य स्थालीपाकस्याग्रतो जुहुयात्

१. 'द्वगन्तव्यानि' क. पाठः. २. 'द्येवमेका', ३. 'निकर्थं स', ४. 'दायदि सर्वाङ्गेभ्योऽवदाय क', ५. 'व्यङ्गाव' ग. पाठः. ६. 'वि' क. पाठः.

हृदयं शूले प्रोतं शामित्र एव प्रतापयति। ततः स्थालीपाकस्याग्रतो जुहोति। द्वितीयार्थे षष्ठी। स्थालीपाकस्य वा एकदेशमवदानमात्रम्। अग्रतः अवदानेभ्यः प्राग् जुहोति। ततोऽवदानानि। अस्मिन्नपि पक्षे स्विष्टकृदपि वियत[२] इत्याहुः॥

**अवदानैर्वा सह ॥ १४ ॥**

जुहोति स्थालीपाकं, नाग्रतोऽवदानानाम् ॥१४॥

**एकैकस्यावदानस्य द्विर्द्विरवद्यति ॥ १५ ॥**

यानि तान्येकादशावदानानि तेषामेकैकस्यार्थाय ततस्ततः प्रदेशाद् द्विर्द्विरवद्यति। द्विर्द्विरिति ग्रहणात् पञ्चावत्तिनामपि द्विरेवेति केचित्। नेत्यन्ये, प्रदर्शनार्थत्वाद् द्विर्ग्रहणस्य। यद्येवमपार्थकं द्विर्ग्रहणं तत् क्रियते अवदानधर्मेषु द्विर्ग्रहणमेव यथा स्याद् देशादिनियमो मा भूदिति॥ १५॥

**आवृतैव हृदयशूलेन चरन्ति ॥ १६ ॥**

आवृन्नाम मन्त्रवर्जिता क्रियापरिपाटी। अनुपदेशादेव मन्त्राभावे सिद्धे[३] तत्प्रतिषेधोऽन्येषां धर्माणां प्राप्त्यर्थः। के ते[४]। आहापस्तम्बः—'अनुपस्पृशन् हृदयशूलमुदङ्परेत्यासञ्चरेऽप उपनिनीय शुष्कार्द्रयोः सन्धावुद्वासयती'ति। अस्माकमपि 'हृदयशूलमुपोयमानमि'त्यादि[५]॥ १६ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ प्रथमाध्याये नवमः खण्डः।

---

१. 'यति ततोऽवदाना' ग. पाठः. २. 'विभिद' क पाठः. ३. 'द्धेऽपि त', ४. 'के पुनस्ते आ', ५ 'मनुमन्त्रयेदि॥' ग. पाठः.

अथ दशमः खण्डः।

**चैत्ययज्ञे प्राक् स्विष्टकृतश्चैत्याय बलिं हरेत् ॥ १ ॥**

इह कश्चित् केनचिदर्थेनार्थी, या एताः प्रतिजनपदमायतनेषु देवताः पूज्यन्ते तासां मध्ये यां च भजते यां च परं मन्यते तस्यै प्रतिशृणोति पशुना स्थालीपाकेनाज्येन वा यच्चान्यद्देवं युक्तं तेन त्वा यक्ष्य इति। स तस्मिन्नर्थे सिद्धे तां देवतां तेन हविषा यजते तस्मिन् विषय इदमुच्यते। चैत्यमायतनम् इह तात्स्थ्यात् ताच्छब्द्यं चैत्यस्थस्य दैवतस्य यज्ञश्चैत्ययज्ञः। अपर आह — यत्र द्रव्यं देवता काम इति सर्वं चित्तपरिकल्पितं स चित्ते भवश्चैत्यः। 'गम्भीराञ्ञ्यः'। 'अव्ययीभावाच्चे'त्यत्र परिमुखादेर्ग्रहणम्। तेषु चित्तशब्दः पठितव्यः। चैत्यश्चासौ यज्ञश्चेति चैत्ययज्ञ इति। तस्मिन् सङ्कल्पितेन हविषाज्यभागान्ते हुत्वा स्विष्टकृतः प्राक् तस्मै चैत्याय तदेव हविर्बलिं हरेत् प्रत्यक्षेण निवेदयेत्। पश्चात् स्विष्टकृत्। तस्याप्यवदानं पूर्ववत्। तदायतनवासिनेऽमुष्मै स्वाहेति प्रधानहोमः। पुनश्चैत्यायेति वचनं प्रत्यक्षहरणार्थम्। सर्वेष्वेव कर्मसु आगन्तुकानि प्राक् स्विष्टकृतः। प्राक् स्विष्टकृत इति वचनमस्मिन् कर्मणि होमोऽस्तीति प्रदर्शनार्थम्। अन्यथा बलिहरणमात्रमेव स्याद् यज्ञशब्दस्य तावत्यपि दृष्टत्वाद् यथा भूतयज्ञ इति ॥ १ ॥

**यद्यु वै विदेशस्थम् ॥ २ ॥**

१. 'प्राक् स्विष्टकृत प्रोक्तस्मै च चैत्याय तदेव बलिं हरे य' ग. पाठः.

यजेतेति शेषः । उवै इति निपातौ वाक्यालङ्कारे विप्रकृष्टो देशो विदेशः ॥ २ ॥

यदि विदेशस्थं चैत्य यजेत यदा चोलेषु स्थितः सोमनाथं, तदा प्रत्यक्षहरणायोगात् किं कर्तव्य तत्राह —

पलाशदूतेन ॥ ३ ॥

हारयेदिति शेषः । पलाशवृक्षेण दूतं कारयित्वा तेन हारयेत् ॥ ३ ॥

यत्र वेत्थ वनस्पत इत्येतयर्चा द्वौ पिण्डौ कृत्वा वीवधेऽभ्याधाय दूताय प्रयच्छेत् ॥ ४ ॥

पादग्रहणादेव सिद्धे एतयर्चेति वचनं पिण्डकरणे अभ्याधाने प्रदाने चाभ्यासार्थम् । यत्र वेत्थ वनस्पत इति द्वौ पिण्डौ कृत्वा एतयर्चा अभ्याधाय एतयर्चा प्रयच्छेदिति । पिण्डयोरेकश्चैत्याय अपरो दूताय पाथेयरूपः । वीवधो नाम स्कन्धवाह्य उभयतोबद्धशिक्यः काष्ठविशेषः तस्मिन् पिण्डावभ्याधाय दूताय प्रयच्छेत् तस्य स्कन्धे निदध्यात् ॥ ४ ॥

इमं तस्मै बलिं हरेति चैनं ब्रूयात् ॥ ५ ॥

यश्चैत्याय परिकल्पितः तमभिमृश्य । तस्मा इत्यस्य स्थाने चैत्यस्य चतुर्थ्या नामनिर्देशः ॥ ५ ॥

अयं तुभ्यमिति यो दूताय ॥ ६ ॥

यो दूताय परिकल्पितः पिण्डः तमभिमृश्यायं तुभ्यमिति ब्रूयात् ॥ ६ ॥

---

१. 'यदूतः स्र' क. ख. पाठः.

**प्रतिभयं चेदन्तरा शस्त्रमपि किञ्चित् ॥ ७ ॥**

अन्तरा कर्तुश्चैत्यस्य मध्ये प्रतिभयं भयङ्करं कान्तारादिकं स्याच्चेत् तदा दूतस्य भयनिवृत्त्यर्थं शस्त्रं खड्गादिकमपि किञ्चित् प्रयच्छेत् ॥ ७ ॥

**नाव्या चेन्नद्यन्तरा प्लवरूपमपि किञ्चिदनेन तरितव्यमिति ॥ ८ ॥**

तयोरेव मध्ये नाव्या नौतार्या नदी चेद् भवति तदा दूतस्य तरणार्थं प्लवरूपमपि किञ्चिद् अलाबुपात्रादिकं प्रयच्छेत् । अनेन तरितव्यमिति च दूतं ब्रूयात् ॥ ८ ॥

**धन्वान्तरियज्ञे ब्रह्माणमग्निं चान्तरा पुरोहिताया‍ग्रे बलिं हरेत् ॥ ९ ॥**

धन्वान्तरिर्नाम चैत्यम् । वैश्रवण इत्येके । अमृतोद्भवश्चिकित्सितस्योपदेष्टेत्यायुर्वेदे प्रसिद्धः । तत्र द्वितीयः स्वरोऽपि ह्रस्वः प्रसिद्धः । तस्य यज्ञे योऽस्मिन् कर्मणि दक्षिणत आसीनो ब्रह्मा तमग्निं चान्तरा तयोर्मध्ये यो धन्वान्तरेः पुरोहितः तस्मै अग्रे प्रथमं बलिं हरेत् पश्चाद् धन्वान्तरये । होमस्तु धन्वान्तरय एव । यदा त्वयं विदेशस्थः तदास्मै सपुरोहितायैकः पिण्डः दूताय द्वितीयः । इमं धन्वान्तरिपुरोहिताभ्यां बलिं हरेदिति द्विवचनेनोहः । अन्ये तु

१. 'ध्ये पुरोहिताय धन्वान्तरेर्यः पुरोहितः तस्मै अग्रे प्रथमं बलिं हरेत् । पश्चाद् धन्वान्तरये होमस्तु धन्वान्तरय एव । यदा विदेशस्थो धन्वान्तरिः तदा धन्वान्तरिपुरोहिताभ्यामेकः पिण्डः दूताय द्वितीयं तस्मा इत्यस्यापि द्विवचनेनोहः इमं धन्वान्तरिपुरोहिताभ्या बलिं हरेति अन्ये' ग. पाठः.

पुरोहिताय कचिदपि प्रत्यक्षहरणाभावाद्विदेशस्थेऽपि धन्वान्तरौ ब्रह्माणमग्निं चान्तरा पुरोहिताय बलिं हरन्ति ॥ ९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ प्रथमाध्याये दशमः खण्डः ।

---

अथैकादशः खण्डः ।

**उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च ॥ १ ॥**

गर्भो येन लभ्यते निषिक्तं वीर्यममोघं भवति तद् गर्भलम्भनम् । येन स गर्भः पुमान् भवति तत् पुंसवनम् । येन स गर्भो न लुप्यति न स्रवति तदनवलोभनम् । एतानि त्रीणि कर्माणि उपनिषद्याम्नातानि तथैव कर्तव्यानि । शाखान्तरोपनिषद्याम्नातानामप्यागमध्यानुष्ठानार्थं वचनम् ॥ १ ॥

**यदि नाधीयात् तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ माषौ यवं च दधि प्रसृतेन प्राशयेत् ॥ २ ॥**

यदि नाधीयात् व्यत्ययेन परस्मैपदम् । स्मरणार्थो वा धातुः । यदि तामुपनिषदं नाधीयीत न स्मरेद्वा तदा[1] किं कर्तव्यम्[2] । तदुच्यते । तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ च माषौ यवं च दधि प्रसृतेन प्राशयेत । तत्र गर्भलम्भनं गृह्यान्तरेषु बहुषु प्रसिद्धम् । तत्रापस्तम्बः—'रजसः प्रादुर्भावात् स्नातामृतुसंमावेशन उत्तराभिरभिमन्त्रयते', 'चतुर्थीप्रभृत्या षोडशीमुत्तरामुत्तरां

---

१. 'ब्राह्मणमग्निं चेत्यादि च' क. ख. पाठः. २. 'दा एवम् । सू' ख. पाठः. ३. 'व्यं सू' ग. पाठः.

युग्मां प्रजानिःश्रेयसमृतुगमन इत्युपदिशन्ती'ति । इह तु पुंसवनमनवलोभनं चोच्यते। तत् तृतीये गर्भमासे कर्तव्यम् । तिष्येणेति 'नक्षत्रे च लुपी'त्यधिकरणे तृतीया । प्राशनेन चास्य सम्बन्धः नोपवासेन । ज्योतिःशास्त्रे कल्पान्तरेषु च तिष्य एव पुंसवनं विहितम । तत्रापरमन्त्रः— 'पुंसवनं व्यक्ते गर्भे तिष्येणे'ति । किञ्च,

"नक्षत्रमुपवासश्च प्राशनस्य गुणौ मतौ ।
गुणानां च परार्थत्वादसम्बन्धः समत्वतः ॥"

समानं रूपं यस्य स सरूपः सरूपो वत्सो यस्याः सा सरूपवत्सा एवम्भूताया गोर्दधनि । सप्तमीनिर्देशात् प्रक्षिप्येति गम्यते । द्वौ द्वौ च माषौ यवं च प्रक्षिप्य तद् दधि पूर्वेद्युरुपोषिताया भार्यायाः प्रसृतेन प्राशयेत् तामेव । उपवासश्च रात्रावभोजनम् । 'औपवस्तमेव कालान्तरे भोजनमि'त्यापस्तम्बधर्मे प्रदर्शनात् । प्रसृतोऽर्धाञ्जलिः । द्वौ द्वाविति वीप्सावचनं वक्ष्यमाणप्रसृतापेक्षम् । एकस्मिंस्तु प्रसृते द्वौ माषौ ॥

**किं पिबसि किं पिबसीति पृष्टा पुंसवनं पुंसवनमिति त्रिः प्रतिजानीयात् ॥ ३ ॥**

प्रतिज्ञानं प्रतिवचनम्। प्राश्नतीं भार्यां भर्ता पृच्छति किं पिबसीति । सा प्रत्याह — पुंसवनमिति । अत्रापि वीप्सावचनं वक्ष्यमाणप्रसृतापेक्षम् । त्रिरित्यनुवादः। 'एवं त्रीन् प्रसृतान्' इत्येव सिद्धे एवं तावदुपदेशः। अपर आह — प्रतिप्राशनमावृत्तम् एवं प्रश्नः प्रतिवचनं चेति । अस्मिन् पक्षेऽपि त्रिरित्यनुवादः ॥ ३ ॥

1. 'श प्रतिप्राश अ' ग. पाठ.

एवं त्रीन् प्रसृतान् ॥ ४ ॥

एवमुक्तेन प्रकारेण त्रीन् प्रसृतान् प्राशयेत् । उक्तेन सह त्रयः प्रसृताः ॥ ४ ॥

अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोति ॥ ५ ॥

उक्तं पुंसवनम् । अनवलोभनमुच्यते । मन्त्रलिङ्गं हि भवति 'माहं पौत्रमघं नियामि'ति । तत्र मण्डलाकारमगारं कर्तव्यं तस्यच्छायायां तत् कर्म भवति । नासिकाबिलस्य द्वित्वाद् दक्षिणस्यामिति विशेष्यते । अस्माद्विशेषणाद् ज्ञायते 'एकाङ्गवचने दक्षिणं प्रतीयाद्' इति परिभाषा ज्ञानेन्द्रियेषु न प्रवर्तत इति । अजीतामोषधीम् अजीर्णां दूर्वामित्युपदेशः । तां नस्तः करोति नस्तःकरणं नाम नासिकाबिलेनान्तःप्रवेशनम् । तच्च स्वरूपेणाशक्यमिति रसीकृत्य कर्तव्यम् । तत्रापस्तम्बः— 'अनवस्नातया कुमार्या दृषत्पुत्रे दृषत्पुत्रेण पेषयित्वा परिवेप्ये'ति । अनुपदेशान्मन्त्रो न भवति ॥ ५ ॥

प्रजावज्जीवपुत्राभ्यां हैके ॥ ६ ॥

एके आचार्याः प्रजावज्जीवपुत्राभ्यामृषिभ्यां दृष्टे ये सूक्ते 'आ ते गर्भो योनिमेतु' 'अग्निरेतु प्रथमो देवतानामि'त्येताभ्यां नस्तःकरणमिच्छन्ति । सूक्तद्वयमुक्त्वा तदन्ते निषेकः । अनयोरपि सूक्तयोर्लिङ्गानि भवन्ति । अनवलोभनमेतदिति ॥ ६ ॥

---

१. 'रिप्लाव्ये'ति मुद्रितपाठः. २. 'न्त्रोऽपि न', ३. 'त्वा' ग. पाठः. ४. 'नमिति' ग., 'यं' क. ख. पाठः.

प्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमस्या आलभेत। यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ मन्येऽहं मां तद्विद्वांसं माहं पौत्रमघं नियामिति ॥ ७ ॥

पुंसवनानवलोभनयोरपि स्थालीपाकः। तेनादात्रेव तं श्रपयित्वाज्यभागान्ते नस्तःकरणान्तं प्रजापतये स्वाहेति हुत्वा हृदयदेशमस्या आलभेत स्पृशेद् यत्त इति मन्त्रेण ॥ ७ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ प्रथमाध्याये एकादशः खण्डः ।

---

अथ द्वादशः खण्डः ।

चतुर्थे गर्भमासे सीमन्तोन्नयनम् ॥ १ ॥

सीमन्त उन्नीयते यस्मिन् कर्मणि तत् सीमन्तोन्नयनम्। तच्च चतुर्थे गर्भमासे कर्तव्यम्। अस्मादेव समाख्यानादिदमत्र प्रधानकर्म न गर्भसंस्कारः। तस्माद् "एवं त्वं गर्भमाधेही"ति गर्भलिङ्गे सत्यपि तस्याप्रधानत्वान्न प्रतिगर्भमस्यावृत्तिः। न च द्वितीयादिषु गर्भेषु चत्वारिंशत्संस्काराणामूनता, आधारसंस्कारद्वारेण तेषामप्ययं संस्कार इति कृत्वा। तस्मात् प्रथम एव गर्भे एतत् कर्म भवति।[1] तथाचापस्तम्बः—"सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासी"ति। पूर्वयोस्तु कर्मणोः गर्भसंस्कारत्वात् प्रतिगर्भमावृत्तिः ॥ १ ॥

---

१. 'ति ह', २. 'स्य' ग. पाठः.

आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ॥ २ ॥

उक्त आपूर्यमाणपक्षः । पुंसा पुन्नामधेयेन हस्तः पुष्य इत्यादिना । पुंसि नक्षत्र इत्येव सिद्धम् । चन्द्रमसैव हि योगे पुष्यादीनां नक्षत्रता । एवं सिद्धे गुरुसूत्रकरणमत्यन्तसंयोगार्थम् । तेन तस्मिन् नक्षत्रे मध्यतोऽर्धे भवति॥ २ ॥

अथाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायां धाता ददातु दाशुष इति द्वाभ्यां राकामहमिति द्वाभ्यां नेजमेष इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च ॥ ३ ॥

जुहुयादिति शेषः । अथशब्दाच्चतुर्थमासस्य पश्चादपि स्यात् । तथाच तलवकारिणां गृह्यं 'सीमन्तोन्नयनं चतुर्थे मासि षष्ठेऽष्टमे वा भवती'ति । अग्निमुपसमाधायेत्यादि समन्वारम्भणान्तं गृहप्रवेशनीये व्याख्यातम् ॥ ३ ॥

अथास्यै युग्मेन शलाटुग्लप्सेन त्रिरन्यया च शलल्या त्रिभिश्च कुशपिञ्जूलैरूर्ध्वं सीमन्तं व्यूहति भूर्भुवःस्वरोमिति त्रिश्चतुर्वा ॥ ४ ॥

अथशब्दः प्रकारभेदं द्योतयति उपविश्य हुत्वा अथोत्थाय व्यूहतीति । चतुर्थ्या तादर्थ्यमुच्यते । किं सिद्धं भवति, आधारभूतायाः स्त्रियाः संस्कारः सीमन्तव्यूहनमिति सिद्धं भवति । युग्मेन समेन अखण्डयतैवार्ध-

१. 'न खण्डयितुमर्हः' ग. पाठः.

यितुं शक्येन । अपक्कानि फलानि शलाटूनि तेषां ग्लप्सेन स्तबकेन, यत्र स्तबके फलानि युग्मानि तेन । त्रिरावृत्तोऽन्यो वर्णो यस्याः तया त्रिरन्ययो शलल्या आरण्यस्य वराहविशेषस्य, यस्ये सूच्याकाराणि रोमाणि, तस्य सूची शलली, सा कृष्णा भवति। तत्र कस्याश्चित् त्रिपु स्थानेपु श्वेतो वर्णः अन्यस्या अन्यथा ततो विशेष्यते त्रिरन्ययेति । कुशपिञ्जूलैः कुशस्तम्बैः तरुणकैरेतैर्द्रव्यैर्युगपद्गृहीतैरूर्ध्वं सीमन्तं व्यूहति । यथा सीमन्तो भवति तथा केशान् पृथक्करोति भूर्भुवःस्वरोमिति मन्त्रेण त्रिश्चतुर्वा । सर्वत्र मन्त्रावृत्तिः ॥ ४ ॥

**वीणागाथिनौ संशास्ति ॥ ५ ॥**

वीणा च गाथा च ययोस्तौ वीणागाथिनौ । संशास्ति प्रेष्यति ॥ ५ ॥

कथ —

**सोमं राजानं संगायतमिति ॥ ६ ॥**

अनेन प्रैपेण ॥ ६ ॥

गाथामाह —

**सोमो नो राजावतु मानुषीः प्रजा निविष्टचक्रासाविति ॥ ७ ॥**

असावित्यत्र सम्बुद्ध्या नद्या नामनिर्देशः॥ ७ ॥

कस्या नद्या —

**यां नदीमुपावसिता भवन्ति ॥ ८ ॥**

---

१. 'या च श' क. ग पाठ. २. 'स्य चक्रारेण रोम्णा श' क, 'स्याश्चर्यकराणि लोमानि तस्य सूची श' ग. पाठ. ३ 'रेण लोम्ना श' ख. पाठ.

यां नदीमुपजीवन्तीत्युक्तं भवति । यथानिविष्टचक्रा कावेरि ताम्रपर्णि यमुने गङ्गे सरस्वतीति ॥ ८ ॥

ब्राह्मण्यश्च वृद्धा जीवपत्यो जीवप्रजा यद्यदुपदिशेयुः ॥ ९ ॥

तत्तत् कुर्यादिति शेषः । जीवन्ति पतयो यासां ताः जीवपत्यः । छान्दसो यणादेशः । जीवपत्न्य इति पाठे "विभाषा सपूर्वस्ये"ति ङीप्नकारौ । यदा तु तौ न भवतः, तदा जीवपतय इति भवति ॥ ९ ॥

वृषभो दक्षिणा ॥ १० ॥

दक्षिणोपदेशादन्यकर्तृकमिति केचित् । नेति वयम् । मन्त्रलिङ्गाद् 'अस्यै मे पुत्रकामायै गर्भमाधेही'ति । दक्षिणा तु ब्रह्मणे देया तदभावे यस्मैकस्मैचित् सदस्याय ॥ १० ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ प्रथमाध्याये द्वादशः खण्डः ।

---

अथ त्रयोदशः खण्डः ।

कुमारं जातं पुरान्यैरालम्भात् सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत् प्र ते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम् आयुष्मान् गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन्निति ॥ १ ॥

---

१. 'हि य पुमानिति । द' ग. पाठ. .'

कुमारमित्यनुच्यमाने जातामिति लिङ्गस्याविवक्षितत्वात् कुमार्यां अपि प्राप्नोति । आवृतैव कुमार्या इत्येतत्तु प्रवासादेत्येत्यस्मिन् विषये वक्ष्यते । यद्येवं कुमारग्रहणमेवास्तु । तत्रापि लिङ्गस्याविवक्षा प्राप्नोति । किञ्च 'एतेन गोदानं षोडशे वर्षे' इत्यत्र जातस्य षोडशवर्षे यथा गृह्येत, अनन्तरस्योपनयनस्य षोडशवर्षं मा ग्राहीति । पुरान्यैरालम्भाद् यावदन्ये न स्पृशेयुः तावदित्यर्थः । सर्पिर्मधुनी विषमधृते प्राशयेदिति सम्बन्धः। हिरण्यनिकाषं हिरण्यं निकष्य निघृष्य तेनैव हिरण्येन प्राशयेत् 'प्र ते ददामी'ति मन्त्रेण ॥ १ ॥

**कर्णयोरुपनिधाय मेधाजननं जपति मेधां ते देवः सविता मेधां देवी सरस्वती मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ इति ॥ २ ॥**

कर्णयोरुपनिधाय किं प्रकृतं हिरण्यं न मुखं कर्णयोर्जपतीत्यर्थसिद्धत्वात् । यस्य मन्त्रस्य जपेन कुमारो मेधावी भवति स मेधाजननः । मेधां ते देवः सविता इत्यादिर्मन्त्रः । उभयोः कर्णयोर्युगपज्जपस्याशक्यत्वादर्थान्मन्त्रस्यावृत्तिः ॥ २ ॥

**अंसावभिमृशति अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । वेदो वै पुत्रनामासि स जीव शरदः शतमिति । इन्द्र श्रेष्ठानि द्रविणानि धेह्यस्मे प्रयन्धि मघवन्नृजीषिन्निति च ॥ ३ ॥**

मध्ये इतिकरणाच्चशब्दाच्च तेन कल्पजेन मन्त्रेणैव द्वावंसौ युगपदभिमृश्य पश्चादितरभ्यामन्ते सकृदभिमृशति ॥ ३ ॥

**नाम चास्मै दधुः ॥ ४ ॥**

बहुवचननिर्देशान्मातृपितृबान्धवा इति समुदिता नाम दधुः। कालस्तु शास्त्रान्तरादागमयितव्यः। तत्र मनुः—

"नामधेयं दशम्यां तु द्वादश्यां वाथ कारयेत्।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते॥"

इति॥ ४॥

तस्य लक्षणमाह—

**घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा ॥ ५ ॥**

वर्गाणां द्वितीयचतुर्थौ रहौ च घोषवन्तः तेषामन्यतमो वर्ण आदौ कर्तव्यः। यरलवा अन्तस्थाः तासामन्यतमो मध्ये कर्तव्यः। अभिनिष्ठानो विसर्जनीयः सोऽन्ते कर्तव्यः। 'अभिनिसः स्तनः शब्दसंज्ञायाम्' इति षत्वम्। तच्च द्व्यक्षरं चतुरक्षरं वा भवति। हरो रुद्रो देवः हरदत्तो भवनाग इत्याद्युदाहरणानि॥ ५॥

द्व्यक्षरं चतुरक्षरं वेति यदुक्तं तत् काम्यमपीत्याह—

**द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः ॥ ६ ॥**

प्रतिष्ठाब्रह्मवर्चसे कुमारस्य, तत्संस्कारत्वात्; न कर्तुः॥ ६॥

**युग्मानि त्वेव पुंसाम् ॥ ७ ॥**

युग्मानि युग्माक्षराणि। एवकारात् तुशब्दाच्च पूर्वोक्तं सर्वमतन्त्रम् इदमेव तन्त्रमिति गम्यते यद् युग्मान्यक्षराणि॥ ७॥

अयुजानि स्त्रीणाम् ॥ ८ ॥

अयुग्मान्यक्षराणि पार्वती भवानीत्यादीनि । एवं तावत् संव्यवहारार्थस्य नाम्नः करणमुक्तम् ॥ ८ ॥

अथाभिवादनीयस्य नाम्न करणमाह—

अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात् ॥ ९ ॥

अयमुपनीतो येनाभिवादयते तदभिवादनीयं नाम । करणे कृत्यप्रत्ययः । तदप्यस्मिन् काले समीक्षेत । पूर्वत्र दध्युरिति बहुवचनम् उत्तरत्र मातापितरौ विद्यातामिति द्विवचनम् इह त्वेकवचनम् । तत्र न ज्ञायते कः समीक्षेतेति । नामकरणे यः प्रधानभूतः कर्ता स समीक्षेत । स च पिता । तदभावे तत्स्थानीयः । समीक्षणं च सम्यङ् निरूप्य करणम् । अतस्तदानीमेवाभिवादनीयमपि नाम पिता सम्यङ् निरूप्य कुर्यादिति, यथा परेण न ज्ञायते । ततस्तन्नाममात्रेऽपि ब्रूयाद् इदमस्याभिवादनीयं नामास्मिन्नवधत्स्वेति । तन्मातापितरौ विद्यातामोपनयनात् तदभिवादनीयं नाम मातापितरावेव विद्यातां जानीयातां नान्ये । कियन्तं कालम् ओपनयनात् आ उपनयनात् । उपनयने कृते तेनाभिवादयस्वेति कुमारायाचक्षीयाताम् ॥ ९ ॥

प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति अङ्गादङ्गात् संभवसि हृदयादधिजायसे आत्मा वै पुत्रनामासि

**स जीव शरदः शतम् इति मूर्धनि त्रिरवघ्राय ॥ १० ॥**

यदा पिता प्रोष्य प्रत्यागच्छति तदा पुत्रस्य शिर उभाभ्यां हस्ताभ्यां सर्वतो गृहीत्वा मूर्धनि त्रिरवघ्राणं कृत्वा अङ्गादङ्गात् सम्भवसीत्येकामृचं जपेत् । एतत् पुत्रे प्रोष्यागतेऽपि कर्तव्यं न्यायस्य तुल्यत्वात् । तथा च सत्याषाढगृह्ये — 'आगतं च पुत्रमि'ति ॥१०॥

**आवृतैव कुमार्यै ॥ ११ ॥**

षष्ठ्यर्थे चतुर्थी । यदनन्तरमुक्तं प्रवासादेत्येति तदत्र विधीयते । अपरे जातकर्मणोऽपि विधानमिच्छन्ति तद् गृह्यान्तरेषु न दृष्टम् ॥ ११ ॥

इति हरदत्ताचार्यमिश्रकृतायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये त्रयोदशः खण्डः ।

---

अथ चतुर्दशः खण्डः ।

**षष्ठे मास्यन्नप्राशनम् ॥ १ ॥**

जन्मनः प्रभृति षष्ठे मास्यन्नप्राशनं कर्तव्यम् ॥ १ ॥

**आजमन्नाद्यकामः ॥ २ ॥**

यः पुत्रमन्नाद्यमन्नादनं कामयते स आजं प्राशयेत् । अजस्य विकारमाजं मांसं, न क्षीरं दधि घृतं वा तैत्तिरेण साहचर्यात् ॥ २ ॥

**तैत्तिरं ब्रह्मवर्चसकामः ॥ ३ ॥**

तित्तिरेर्विकारं तैत्तिरं तित्तिरिः पक्षिविशेषः तन्मांसम् । व्यञ्जनत्वेन चानयोरुपदेशः । अन्नं तु वक्ष्यमाणमेव व्यञ्जनत्वेन चानयोर्लोके प्रसिद्धत्वात् ॥ ३ ॥

घृतौदनं तेजस्कामः ॥ ४ ॥

घृतेन संस्कृत ओदनो घृतौदनः न तु घृतमिश्रः। यदि तथा स्याद् घृतं तेजस्काम इत्येवं ब्रूयाद्, यथा पूर्वयोर्व्यञ्जनत्वेन निवेशः तथा घृतस्यापि भविष्यति ॥ ४ ॥

दधिमधुघृतमिश्रमन्नं प्राशयेत् ॥ ५ ॥

दध्यादिभिर्मिश्रमन्नं प्राशयेदित्यकामसंयुक्तो विधिः॥५॥

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे इति ॥ ६ ॥

अयं प्राशनमन्त्रः । सर्वेषु च प्राशनेष्वयं मन्त्रो भवति, नानन्तर एव नित्ये प्राशने । ते खल्वस्मिन्नेव प्राशने कामसंयोगेन गुणविधयः । प्राशने प्रकृते पुनः प्राशयेदिति वचनमप्येतदर्थमेव, कथं प्राशनमात्रे मन्त्रः स्यादिति ॥ ६ ॥

आवृतैव कुमार्यै ॥ ७ ॥

गतम् ॥ ७ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ प्रथमाध्याये चतुर्दशः खण्डः।

---

१. 'ये' ख पाठ

अथ पञ्चदशः खण्डः ।

**तृतीये वर्षे चौलम् ॥ १ ॥**

कर्तव्यमिति शेषः । जाताधिकाराज्जन्मनः प्रभृति ॥

**यथाकुलधर्मं वा ॥ २ ॥**

यस्य यादृशः कुलधर्मः तस्य तथा वा कर्तव्यम् । प्राग्वा पश्चाद्वा । यस्यापि कुलधर्मो नियतः तस्यापि तृतीयो वर्षो विकल्पेन भवति ॥ २ ॥

**उत्तरतोऽग्नेर्व्रीहियवमाषतिलानां पृथक् पूर्णशरावाणि निदधाति ॥ ३ ॥**

पृथग्ग्रहणाद् व्रीहीणामेव पूर्णमेकं शरावम् । एवं यवानाम् एवं माषाणाम् एवं तिलानाम् । सुहितार्थयोगे षष्ठी 'पूरणगुणसुहित' इति ज्ञापकात् । यथा ओदनस्य पूर्णाश्छात्रा इति । तानि चत्वारि पात्राण्युत्तरतोऽग्नेर्निदधाति स्थापयति । शरावाणां परस्परस्पर्शेऽपि न दोषः पृथग्ग्रहणस्यान्यार्थत्वात् ॥ ३ ॥

**पश्चात् कारयिष्यमाणो मातुरुपस्थे ॥ ४ ॥**

यदर्थं[1] तत् कर्म स कारयिष्यमाणः कुमारः । स पश्चादग्नेर्मातुरुपस्थे । किम् । 'उपनिहितानि भवन्ती'ति वक्ष्यमाणं विपरिणामेन सम्बन्धनीयम् । उपनिहितो भवतीति ॥ ४ ॥

**आनडुहं गोमयं नवे शरावे शमीपर्णानि चोपनिहितानि भवन्तीति ॥ ५ ॥**

---

१. 'येन तत् कर्म प्रवर्तितं स' घ. पाठः.

आनडुहं गोमयं नवे शरावे । पूर्ववत् सम्बन्धः पश्चादग्नेरुपनिहितं भवति । शमीपर्णानि चोपनिहितानि भवन्ति पश्चादग्नेर्नवे शराव इत्येव ॥ ५ ॥

मातुः पिता दक्षिणत एकविंशतिकुशपिञ्जूलान्यादाय ॥ ६ ॥

आसीतेति शेषः । कुमारस्य पिता मातुर्दक्षिणतः कुशस्तम्बान्यादायासीत । मातुरितिवचनमग्नेर्दक्षिणतो मा-भूत् । अस्मिन् पक्षे पितुरन्यः कर्ता ॥ ६ ॥

ब्रह्मा वैतानि धारयेत् ॥ ७ ॥

योऽस्मिन् कर्मणि ब्रह्मा स एतानि कुशपिञ्जूलानि गृहीत्वा धारयेत् । अस्मिन् पक्षे पितैव कर्ता । ब्रह्मा च स्वस्थान एवासीनो धारयेत् । मातुर्दक्षिणत इत्येतत् तु पितृपक्षे ॥

पश्चात् कारयिष्यमाणस्यावस्थाय शीतोष्णा अपः समानीयोष्णेन वायवुदकेन हीति ॥ ८ ॥

शीताश्चोष्णाश्चाप उभयीः समानयति मिश्रयति उष्णेन वायविति मन्त्रेण ॥ ८ ॥

तासां गृहीत्वा नवनीतं दधिद्रप्सान् वा प्रदक्षिणं शिरस्त्रिरुन्दति ॥ ९ ॥

तासां समानीतानामपामेकदेशं गृहीत्वा नवनीतं दधिकणान् वा ताभिः सह गृहीत्वा कुमारस्य शिरः प्रदक्षिणं त्रिरुन्दति क्लेदयति ॥ ९ ॥

१. 'नि गृहीत्वासी' ग. घ. पाठः. २ 'स्यो'-क. ख. पाठ .

**अदितिः केशान् वपत्वाप उन्दन्तु वर्चस इति ॥ १० ॥**

अयमुन्दनमन्त्रः ॥ १० ॥

**दक्षिणे केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति ओषधे त्रायस्वैनमिति । स्वधिते मैनं हिंसीरिति लौहेन क्षुरेण ॥ ११ ॥**

संदधातीति शेषः । सपिञ्जूलान् केशान् लौहेन क्षुरेण संदधाति स्वधिते मैनं हिंसीरिति मन्त्रेण । क्षुरस्य लौहत्वाव्यभिचारेऽपि लौहेनेत्युच्यते शास्त्रान्तरोक्तस्ताम्रमयः क्षुरो यथा न स्यादिति ॥ ११ ॥

**प्रच्छिनत्ति येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्यायुष्माञ्जरदष्टिर्यथा सदिति ॥ १२ ॥**

तेन क्षुरेण सपिञ्जूलान् केशान् प्रच्छिनत्ति येनावपदिति मन्त्रेण ॥ १२ ॥

**प्रच्छिद्य प्रच्छिद्य प्रागग्राञ्छमीपर्णैः सह मात्रे प्रयच्छति तानानडुहे गोमये निदधाति ॥ १३ ॥**

वीप्सा वक्ष्यमाणप्रच्छेदनापेक्षा । प्रागग्रानिति वीयमानानां प्रागग्रता विधीयते । शमीपर्णैः सह एकीकृत्य मातुर्हस्ते ददाति । सा तानानडुहे गोमये निदधाति । अत्र प्रागग्रताया नियमो नास्ति ॥ १३ ॥

**येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् । तेन ते आयुषे वपामि सुश्लोक्याय स्वस्तय इति**

द्वितीयम्। येन भूयश्चरात्ययं ज्योक् च पश्याति सूर्यम्। तेन ते आयुषे वपामि सुश्लोक्याय स्वस्तय इति तृतीयम् ॥ १४ ॥

प्रच्छिनचीत्येव ॥ १४ ॥

सर्वैर्मन्त्रैश्चतुर्थम् ॥ १५ ॥

येनावपत्, येन धाता, येन भूयश्चेत्येतैः । अन्यत् पूर्वसमानम् ॥ १५ ॥

एवमुत्तरतस्त्रिः ॥ १६ ॥

यथा दक्षिणे केशपक्षे प्रच्छेदनानि कृतानि, एवं तैरेव मन्त्रैरुत्तरे केशपक्षे कर्तव्यानि। किं सर्वाणि, नेत्याह— त्रिः आदितस्त्रीणि प्रच्छेदनानि भवन्ति । सर्वैर्मन्त्रैश्चतुर्थमित्येतन्न स्यादित्यर्थः । तदेवं दक्षिणेषु चतुर्षु प्रच्छेदनेषु त्रीणि त्रीणि द्वादश उत्तरेषु त्रीणि त्रीणि नव इत्येकविंशतेः पिञ्जूलानां विनियोगः ॥ १६ ॥

क्षुरतेजो निमृजेद् यत् क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान् । शुन्धि शिरो मास्यायुः प्रमोषीरिति ॥ १७ ॥

तेजो धारा तां निमृजेत् निमृज्यात् निशब्दोपादानान्नीचीनं मार्जनं यत् क्षुरेणेति मन्त्रेण ॥ १७ ॥

नापितं शिष्याच्छीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षण्वन् कुशली केशान् कुर्विति ॥ १८ ॥

शिष्यात् प्रेष्येत् शीतोष्णाभिरित्यादिना प्रैषेण याः पूर्वसमानीताः शीतोष्णा आपः ताभिरद्भिरप्कार्यं कुर्वाणः अक्षण्वन् क्षुरेण क्षतिमकुर्वन् कुशली कुर्विति प्रैषस्यार्थः। कुशलीकरणं वपनं विपरीतलक्षणयो मङ्गलत्वारवत्। 'रिक्तो वा एषो न विहितो यन्मुण्ड' इति श्रूयते ॥ १८ ॥

**यथाकुलधर्मं केशवेशान् कारयेत् ॥ १९ ॥**

एकशिखस्त्रिशिखः पञ्चशिख इति कुलधर्माः । तेषु यो यस्य कुलधर्मः तेन तस्य केशवेशान् केशसन्निवेशान् कारयेत् । वेषानित्यपि पाठे स एवार्थः ॥ १९ ॥

**आवृतैव कुमार्यै ॥ २० ॥**

होमादिकं सर्वं लुप्यते । वपनं तूष्णीं कर्तव्यमित्यर्थः ॥ २० ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये पञ्चदशः खण्डः ।

---

अथ षोडशः खण्डः ।

**एतेन गोदानं षोडशे वर्षे ॥ १ ॥**

गोदानं नाम वेदव्रतं तदेतेन[2] चौलकर्मणा व्याख्यातम् । षोडशे वर्षे कर्तव्यं, न तृतीये । विशेषो वक्ष्यते ॥ १ ॥

**केशशब्दे तु श्मश्रुशब्दान् कारयेत् ॥ २ ॥**

चौलकर्मणि मन्त्रगतो यः केशशब्दः "अदितिः केशान् वपतु वपसि केशानि'ति तत्स्थाने श्मश्रुशब्दान् ब्रूयात् ।

---

१. 'या । रि' क. ख. ग. पाठः. २. 'ये त्वत्र विशेषास्ते च' ग. पाठः.

'अदितिः श्मश्रूणि वपतु', 'वप्ता वपसि श्मश्रूणी'ति । केशशब्द इत्येकवचनं जातिपरम् । एवं च श्मश्रुशब्दमिति वक्तव्ये बहुवचनं विधिगतस्यापि केशशब्दस्य स्थाने श्मश्रुशब्द-प्रवेशार्थं, यथा दक्षिणे केशपक्ष इत्यस्य दक्षिणे श्मश्रुपक्ष इति ॥ २ ॥

**श्मश्रूणीहोन्दति ॥ ३ ॥**

इह गोदाने श्मश्रूण्युन्दति, न केशान् ॥ ३ ॥

**शुन्धि शिरो मुखं मास्यायुः प्रमोषीरिति ॥ ४ ॥**

क्षुरनिमार्जने मुखशब्दोऽधिक इति विशेषः ॥ ४ ॥

**केशश्मश्रुलोमनखान्युदक्संस्थानीति संप्रेष्यति ॥ ५ ॥**

नापितस्य शासने विशेषः शीतोष्णाभिरद्भिरारभ्याक्ष-ण्वन् केशश्मश्रुनखलोमान्युदक्संस्थानि कुशलीकुर्विति ॥ ५ ॥

**आप्लुत्य वाग्यतः स्थित्वाऽहःशेषमाचार्यसकाशे वाचं विसृजेत वरं ददामीति ॥ ६ ॥**

आप्लुत्य स्नात्वा कृतवाग्यमनः अहश्शेषं तिष्ठेद्, ग-मनासनशयनादि न कुर्यात् । तत आचार्यस्य सकाशे वरं ददामीति वाचं विसृजेत् ॥ ६ ॥

को वरः तदाह—

**गोमिथुनं दक्षिणा ॥ ७ ॥**

धेनुश्च ऋषभश्च गोमिथुनं सा दक्षिणाचार्याय ॥ ७ ॥

**संवत्सरमादिशेत् ॥ ८ ॥**

एवं कर्म कृत्वा संवत्सरं व्रतमादिशेत् अपरेद्युरहनि ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये षोडशः खण्डः ।

---

अथ सप्तदशः खण्डः ।

**अष्टमे वर्षे ब्राह्मणमुपनयेत् ॥ १ ॥**

जाताधिकाराज्जननादारभ्याष्टममुच्यते ।
कुमारमित्यधिकृतेर्न स्त्रीणामुपनायनम् ॥
ब्राह्मणग्रहणं चात्र शूद्रादिविनिवृत्तये ।
विशेषो वक्ष्यते यस्मादिह क्षत्रियवैश्ययोः ॥
ब्राह्मणः क्षत्रियो वैश्य इति बौधायनादिभिः ।
उक्तानामनुलोमानामप्यत्र ग्रहणं मतम् ॥
परस्मैपदपाठोऽयमध्येतॄणां प्रमादजः ।
आचार्यकरणे यस्मात् प्राप्नोत्यत्रात्मनेपदम् ॥ १ ॥

**गर्भाष्टमे वा ॥ २ ॥**

गर्भाष्टमे वर्षे यस्मिन् वर्षे गर्भो भूत्वा शेते स गर्भः। सोऽष्टमो यस्येति बहुव्रीहिः । षष्ठीसमासस्तु पूरणप्रत्ययान्तेन प्रतिषिद्धः ॥ २ ॥

**एकादशे क्षत्रियम् ॥ ३ ॥**

प्रकरणात् गर्भैकादशे वेति गम्यते ॥ ३ ॥

**द्वादशे वैश्यम् ॥ ४ ॥**

अत्रापि गर्भद्वादशे वेति ॥ ४ ॥

अनुकल्पानाह—

**आ षोडशाद् ब्राह्मणस्यानतीतः कालः, आ द्वाविंशात् क्षत्रियस्य आ चतुर्विंशाद् वैश्यस्य ॥ ५ ॥**

अभिविधावाङ् । यद्यप्यनतीतः काल इत्युक्तं तथापि मुख्यात् कालादूर्ध्वं कियदपि प्रायश्चित्तं भवति । आहापस्तम्बः—'अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्याप्य' इति ॥ ५ ॥

**अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥ ६ ॥**

अतः षोडशादिभ्यो वर्षेभ्य ऊर्ध्वम् एषामकृतप्रायश्चित्तानां सावित्र्यामधिकारो नास्ति ॥ ६ ॥

अतश्च—

**नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः ॥ ७ ॥**

(विवाहः ? व्यावहः)कन्याया दानप्रतिग्रहौ । रागाल्लोभाद् भयादज्ञानाद् वा केनचिदुपनीतस्यापि नाध्यापनादीनि कर्तव्यानीत्येवमर्थस्तेषां प्रतिषेधः । एतच्च सर्वं प्रायश्चित्ते सति कर्तव्यमेव । आहापस्तम्बः—'अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः । तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् । तेषामिच्छतां प्रायश्चित्तम् । यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरः । अथोपनयनं तत उदकोपस्पर्शनम् । प्रतिपुरुषं संख्याय संवत्सरान् यावन्तोऽनुपेताः स्युः । सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुष्पवित्रेण सामप-

१. 'युः ॥ क' क. ख. ग. पाठ:

विन्नेणाङ्गिरसेनेति। अपिवा व्याहृतीभिरेव। अथाध्याप्यः। अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसंस्तुताः। तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिः। अथ गृहमेधोपदेशनम्। नाध्यापनम्। ततो यो निर्वर्तते तस्य संस्कारः यथा प्रथमेऽतिक्रमे। तत ऊर्ध्वं प्रकृतिवदि'ति। यस्य पिता पितामहश्चानुपेतौ इतिशब्दात् स्वयं च षोडशादिभ्य ऊर्ध्वं ते तथाविधा माणवका ब्रह्महण इत्येव कीर्तिता वेदवादिभिः। तेषामभ्यागमनादि वर्जयेत्। अभ्यागमनं यज्ञार्थमुपसर्पणं गृहागते प्रत्युत्थानादि। तेषामिच्छतामिति वचनात् न बलात्कारेण कारयितव्याः। यथा प्रथमेऽतिक्रमे सप्तदशात् प्रागष्टमादूर्ध्वमुपनयनातिक्रमे ऋतुस्त्रैविद्यकस्य ब्रह्मचर्यस्य कालः। ।एवमत्र संवत्सरः। अथोपनयनं तत उदकोपस्पर्शनम्। कियन्तं कालं कैर्वा मन्त्रैः। प्रतिपुरुषं यदि स्वयमेवानुपेतस्तदैकं संवत्सरम् अथ पिता द्वौ संवत्सरौ अथ पितामहोऽपि त्रीन् संवत्सरानिति। अथ मन्त्राः 'यदन्ति यच्च दूरके' इति सप्त पवमानदेवत्याः। यजुष्पवित्रम् 'आपो अस्मान् मातरः शुन्धयन्त्वि'ति। सामपवित्रं वामदेव्ये तृचे गीतं 'कयानश्चित्र आभुवदि'ति। आङ्गिरसं 'हंसः शुचिषदि'ति। अपिवा व्याहृतयः। एवं संवत्सरे गते अथाध्याप्यः। अथ यस्य, पूर्वेण गतम्। द्वादशवर्षाणि [1] ब्रह्मचर्यम्। त्रिषु वेदेषु समानं त्रैविद्यकं

१. 'तु वेदस' ख. ग पाठ.

ब्रह्मचर्यम् । गुरुशुश्रूषा भैक्षचरणम् इत्येतत् पावमानादिभिरिति उदकोपस्पर्शनमिति गम्यमानत्वान्नोक्तम् । कालस्यानुक्तत्वात् संवत्सरमेव । गृहमेधो गृह्यशास्त्रं तस्योपदेशो गृह्यकर्मभिराधिक्रियत इत्यर्थः । नाध्यापनं वेदस्य । तत एवं कृतप्रायश्चित्ताद् यो निर्वर्तते उत्पद्यते तस्योपनयनं संस्कारः कर्तव्यः । यथा प्रथमेऽतिक्रमे अष्टमादूर्ध्वमृतुं त्रैविद्यकं ब्रह्मचर्यं चरेदित्यादि ततस्तु यो निर्वर्तते तत आरभ्य प्रकृतिवद्यथाप्राप्तमुपनयनं न किञ्चित् प्रायश्चित्तमिति ॥ ७ ॥

**अलङ्कृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतमैणेयेन वाजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम् ॥ ८ ॥**

द्वितीयानिर्देशादुपनयेदिति व्यवहितमपि सम्बध्यते । कुमाराधिकारे पुनः कुमारग्रहण'मथोपेतपूर्वस्ये'त्युपनीतस्य पुनरुपनयनेऽलङ्कारो मा भूदिति । व्याख्यातं कुशलीकरणम् । अहतम् अनुपयुक्तमभिनवं तेन वाससा संवीतं प्रावृतम् । अजिनं चर्म तेन वा वाससा वा संवीतम् । वासोजिनयोर्विकल्पः । एतावत् साधारणम् । अजिने विशेषानाह — ऐणेयेन ब्राह्मणमित्यादि । एणी बिन्दुरहिता मृगी तस्या विकार ऐणेयम् । 'एण्या ढञ्' । रुरुः बिन्दुमान् मृगः । एवं संवीतं कुमारमुपनयेत् । उपनयनं नाम पितृकुलाद् विधिवदाचार्यकुलप्रापणम् । अस्मिन्नवसरे यज्ञोपवीतधारणम् । यथाह बोधायनः — स्नातं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चन् वाचयति 'यज्ञोपवीतं परमं पवित्रमि'ति ॥ ८ ॥

१. 'त्वा' क. पाठः.

**यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः॥९॥**

व्यवहितकल्पनया योगद्वयमिदं व्याख्येयम्। वासांसि वसीरन्निति नित्यो विधिः। यदि रक्तानि वसीरन् काषायं ब्राह्मण इत्यादिरनित्यो विधिः। शुक्लस्य वर्णान्तरोपादानं रागः कषायमञ्जिष्ठाहरिद्रा रञ्जनद्रव्याणि॥ ९॥

**तेषां मेखला मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्य आवी वैश्यस्य॥ १०॥**

मुञ्जा तृणविशेषः। धनुर्ज्या धनुषोऽपनीय ग्राह्या मौर्वी। अविरूर्णायुः तल्लोमभिः कृता आवी॥ १०॥

**तेषां दण्डाः पालाशो ब्राह्मणस्य औदुम्बरः क्षत्रियस्य बैल्वो वैश्यस्य केशसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य घ्राणसंमितो वैश्यस्य॥ ११॥**

ते च क्रमेण मूर्धललाटनासाग्रप्रमाणाः यूपवक्राः सत्वचोऽनग्निवूपिता नृणामनुद्वेजकाः॥ ११॥

**सर्वे वा सर्वेषाम्॥ १२॥**

उक्ताश्चानुक्ताश्च। तथाच गौतमः—'यज्ञियो वा सर्वेषामि'ति। आपस्तम्बस्तु—'वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ती'ति॥ १२॥

---

१. 'स्म तेषां सर्वेन दण्डा भवन्ति। दण्डनियमो मेखलाभिर्व्याख्यातः। ते च शाखान्तरोक्तलक्षणा भवन्ति। के' ख० पाठः.

समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्यो-ऽवतिष्ठते ॥ १३ ॥

अथ कुमारे समन्वारब्धे समन्वारब्धवति जुहोत्या-चार्यः । शेषं स्पष्टम् ॥ १३ ॥

पुरस्तात् प्रत्यङ्मुख इतरः ॥ १४ ॥

अवतिष्ठत इत्येव । इतरः कुमारः ॥ १४ ॥

अपामञ्जली पूरयित्वा तत्सवितुर्वृणीमह इति पूर्णेनास्य पूर्णमवक्षारयत्यासिच्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसा-विति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् ॥ १५ ॥

अथाचार्य आत्मनः कुमारस्य चाञ्जली अपां पूरयति अद्भिः पूरयति तत्रार्थादाचार्यस्यान्यः पूरयति आचार्यस्य[1] प्रयोजककर्तृत्वम् । पूर्णेन चात्मनोऽञ्जलिना पूर्णं कुमारस्या-ञ्जलिमवक्षारयति तत्सवितुर्वृणीमह इति मन्त्रेण । अवक्षारणे सत्यर्थसिद्धमासेचनम् । तथाप्यासिच्येत्युच्यते । कथम् । आसेचनं कुर्यात्, न कारयेदित्येवमर्थम् । आसिच्य तस्य कुमारस्य पाणिं साङ्गुष्ठं गृह्णीयात् पाणिना देवस्य त्वेति मन्त्रेण । असावित्यत्र सम्बुद्ध्या कुमारस्य नामनिर्देशः कर्त-व्यः ॥ १५ ॥

सविता ते हस्तमग्रभीदसाविति द्वितीयम् । अ-ग्निराचार्यस्तवासाविति तृतीयम् ॥ १६ ॥

---

१. 'स्य तु प्र' क. पाठः.

सविता ते हस्तमग्रभीदित्यनेन मन्त्रेण द्वितीयं ग्रहणं कुर्यात् । एतेनोत्तरं व्याख्यातम् ॥ १६ ॥

आदित्यमीक्षयेद् देव सवितरेष ते ब्रह्मचारी तं गोपाय स मामृतेत्याचार्यः ॥ १७ ॥

अथ कुमारमीक्षयेदाचार्यो देव सवितरिति मन्त्रं ब्रूयात् । आचार्यग्रहणमनर्थकं यथा पूर्वेषु कर्मस्वाचार्यः कर्ता एवमत्रापि भविष्यति । तत् क्रियते मन्त्रोऽप्याचार्यस्य कथं स्यादिति । इदमपि पूर्ववदेव सिद्धम् । एवं तर्ह्येतद् ज्ञापयत्याचार्यः अन्यत्रैवंविधे विषये ईक्षितुरेव मन्त्र इति । यथा 'भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापयेत् त्वं व्रतानां व्रतपतिरसी'ति ॥ १७ ॥

कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वा कमुपनयते काय त्वा परिददामीति ॥ १८ ॥

परिदद्यादिति शेषः, मन्त्रलिङ्गात् । वक्ष्यति च 'एतेन वापनादि परिदानान्तं व्रतादेशनं व्याख्यातमि'ति 'परिदानं कालश्चे'ति च ॥ १८ ॥

युवा सुवासाः परिवीत आगादित्यर्धर्चेनैनं प्रदक्षिणमावर्तयेत् ॥ १९ ॥

प्रकृतेऽपि कुमारे पुनरेनमिति वचनादावर्तयितुर्मन्त्रः, नावर्त्यमानस्य ॥ १९ ॥

तस्याध्यंसौ पाणी कृत्वा हृदयदेशमालभेतोत्तरेण ॥ २० ॥

---

१. 'रमादित्यमी' घ. पाठ.

तस्य कुमारस्याध्यंसौ अंसयोरुपरि पाणी हृत्वा गमयित्वा तस्य हृदयदेशमालभेत उत्तरेणार्धर्चेन 'तं धीरा' स इत्यनेन । अथोदुभौ प्राङ्मुखौ भवतः पुरस्तादाचार्यः ॥ २० ॥

**अग्निं परिसमूह्य ब्रह्मचारी तूष्णीं समिधमादध्यात् ॥**

यद्यप्यसावग्निः पूर्वमेव परिसमूहनेन संस्कृतः, तथापि वचनात् पुनरपि परिसमूहितव्यः । अपर आह —वक्ष्यति 'सायं प्रातः समिधमादध्यादि'ति तदर्थोऽयं परिसमूहनविधिरिति । ब्रह्मचारिग्रहणमाचार्यनिवृत्त्यर्थम् । मन्त्रानुपदेशादेव सिद्धे तूष्णींग्रहणं तूष्णींहोमधर्मप्राप्त्यर्थं प्रजापतिं मनसा ध्यायन्निति ॥ २१ ॥

तमिमं तूष्णींपक्षं स्तौति—

**तूष्णीं वै प्राजापत्यं प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते ॥ २२ ॥**

करत्वा कमुपनयते काय त्वा परिददामीति प्रजापतये ब्रह्मचारी परिदत्तस्तस्मादसौ प्राजापत्यः ॥ २२ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये सप्तदशः खण्डः ।

---

अथाष्टादशः खण्डः ।

**मन्त्रेण हैके ॥ १ ॥**

एके आचार्या मन्त्रेण समिदाधानमिच्छन्ति । हकारोऽभिमतत्वप्रदर्शनार्थः । अन्यथा ब्राह्मणोक्तत्वात् पूर्वपक्षो बलीयान् स्यात् । हशब्दात् तुल्यबलत्वं भवति । तुल्यबल-

त्वाद् विकल्पः। अग्नये समिधमाहार्षं बृहते जातवेदसे तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहेति मन्त्रः ॥ १ ॥

**स समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिस्तेजसा मा समनज्मीति ॥ २ ॥**

स इत्युच्यते नियमार्थम् अन्यत्र समिदाधाने संमार्जनं मा भूदिति सामिधौ वा जपेद्धेति(?)। समिद्ग्रहणमनर्थकं प्रकृतत्वात्। तत् क्रियते उभयोरपि पक्षयोर्यथा स्यादिति मन्त्रपक्षे चामन्त्रपक्षे च। आधायग्रहणं सायंप्रातः सामिधमादध्यादित्यत्राप्युत्तरो विधिर्यथा स्यादिति। प्रतिनिमार्जनमग्नेरुपस्पर्शनं मन्त्रश्च भवति ॥ २ ॥

**तेजसा ह्येवात्मानं समनक्तीति विज्ञायते ॥ ३ ॥**

ब्राह्मणानुकर्षणं प्ररोचनार्थम् ॥ ३ ॥

**मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु। यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् इत्युपस्थाय जान्वाच्योपसंगृह्य ब्रूयाद् अधीहि भोः सावित्रीं भो अनुब्रूहीति ॥ ४ ॥**

ततो मयि मेधामित्यादिभिरग्निमुपतिष्ठेत। एतच्च सायंप्रातः समिधमादध्यादित्यत्र नित्येऽपि सामिदाधाने भवति।

१. 'रगो ऽि' ख. पाठः.

आचारप्राप्तं भसितधारणम् । उपस्थाय जान्वाच्य दक्षिणजानुं भूमौ कृत्वाचार्यमुपसंगृह्णीयात् । उपसंग्रहणमभिवादनम् । तच्च दक्षिणोत्तराभ्यां पाणिभ्यामाचार्यस्य पादौ स्पृष्ट्वा कर्तव्यम् । दक्षिणेन दक्षिणं सव्येन सव्यम् । एवमुपसंगृह्य अधीहि भोः सावित्रीम् इत्यादिमन्त्रं ब्रूयादाचार्यं प्रति ॥ ४ ॥

**तस्य वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वाम् ॥ ५ ॥**

तस्येत्युच्यते ब्रह्मचारिणो यद्वासः तेन यथा स्यादिति । तस्य वाससात्मनश्च पाणिभ्यां ब्रह्मचारिणः पाणी संगृह्य सावित्रीमन्वाह प्रथमं पच्छः ततोऽर्धर्चशः ततः सर्वामिति । तत्सवितुर्वरेण्यमित्येषा सावित्री प्रसिद्धेः, न याकाचन सवितृदेवत्या ॥ ५ ॥

**यथाशक्ति वाचयित्वा हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति । मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यामिति ॥ ६ ॥**

सर्वेषु वचनेषु यथा शक्नोति ब्रह्मचारी वक्तुं तथा वाचयितव्यम् । वाचयित्वा कुमारस्य हृदयदेशे आत्मनः पाणिमूर्ध्वाङ्गुलिमुपदधाति 'मम व्रत' इत्यनेन मन्त्रेण ॥ ६ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्यायेऽष्टादशः खण्डः ।

---

अथैकोनविंशः खण्डः ।

**मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् । ब्रह्मचार्यस्यपोऽशान कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति ॥ १ ॥**

या यस्य मेखला तां तस्याबध्य यो यस्य दण्डः तं तस्मै प्रदाय ब्रह्मचार्यसीत्यादिना ब्रह्मचर्यमादिशेत् । दृष्टार्थत्वादादेशस्य मन्त्रार्थमपि ब्रूयात् । त्वमिदानीं ब्रह्मचार्यसि अपोऽशान मयानुज्ञातोऽप एवाशान । कर्म कुरु समिदाधानभिक्षाचरणादि । दिवा मा स्वाप्सीः स्पष्टम् । आचार्याधीनः तच्छासने तिष्ठन् वेदमधीष्व इति मन्त्रार्थः ॥ १ ॥

**द्वादशवर्षाणि वेदब्रह्मचर्यम् ॥ २ ॥**

वेदस्य ब्रह्मचर्यमित्येकवचनान्तस्य समासः । एकस्य वेदस्य द्वादशवर्षाणि ब्रह्मचर्यं, द्वयोश्चतुर्विंशतिः, त्रयाणां षट्त्रिंशत्, चतुर्णामष्टाचत्वारिंशत् । तथाचापस्तम्बः— 'उपेतस्याचार्यकुले ब्रह्मचारिवासः । अष्टाचत्वारिंशद्वर्षाणि । पादोनम् । अर्धेन । त्रिभिर्वा । द्वादशावरार्ध्यम्' इति ॥ २ ॥

**ग्रहणान्तं वा ॥ ३ ॥**

अथवा यावता कालेन यो वेदो गृहीतो भवति, तावन्तं कालं तस्य ब्रह्मचर्यम् । पूर्वोक्तात् कालात् प्रागूर्ध्वं वा । एवं ब्रुवता त्रिविधं स्नानं प्रदर्शितं भवति । यथाह याज्ञवल्क्यः—

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥"

इति ॥ ३ ॥

**सायंप्रातर्भिक्षेत ॥ ४ ॥**

यावदात्मने चाचार्याय च पर्याप्तं तावद् भिक्षेत । आत्मन एव वा ॥ ४ ॥

**सायंप्रातः समिधमादध्यात् ॥ ५ ॥**

पुनः सायंप्रातर्ग्रहणं तावन्मात्रप्रयुक्तं समिदाधानं यथा स्यात् । तेन भोजने सति भिक्षाचरणं भवति । असति नास्ति । समिदाधानं तु नित्यम् ॥ ५ ॥

**अप्रत्याख्यायिनमग्रे भिक्षेत ॥ ६ ॥**

*आदौ ह्रस्वश्छान्दसः । अपपाठो वा । यो न प्रत्याचष्टे तं प्रथमं भिक्षेत । ततो यथासम्भवम् ॥ ६ ॥

**अप्रत्याख्यायिनीं वा ॥ ७ ॥**

एवंभूतां स्त्रियं वा प्रथमं भिक्षेत ॥ ७ ॥

**भिक्षां भवान् ददात्विति ॥ ८ ॥**

अनेन मन्त्रेण सर्वेषां वर्णानां पुरुषं प्रति याचनम् । यदा तु स्त्री याच्यते तदा भिक्षां भवती ददात्विति ॥ ८ ॥

**अनुप्रवचनीयमिति वा ॥ ९ ॥**

अनुप्रवचनीयं भवान् ददात्विति वा भिक्षां याचते । अस्मादेवं ज्ञायते — अनुप्रवचनीयार्थं भिक्षान्तरमिदं, न सायंप्रातर्भिक्षाचरणे गुणविधिरिति । तत्र मनुराह —

"भवत्पूर्वं चरेद् भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥

इति ॥ ९ ॥

---

* 'अप्रत्यख्यायिनम्' इति पाठोऽन्यत्र ।

अथैकोनविंशः खण्डः ।

**मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् । ब्रह्मचार्यस्यपोऽशान कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति ॥ १ ॥**

या यस्य मेखला तां तस्याबध्य यो यस्य दण्डः तं तस्मै प्रदाय ब्रह्मचार्यसीत्यादिना ब्रह्मचर्यमादिशेत् । दृष्टार्थत्वादादेशस्य मन्त्रार्थमपि ब्रूयात् । त्वमिदानीं ब्रह्मचार्यसि अपोऽशान मयानुज्ञातोऽप एवाशान । कर्म कुरु समिदाधानभिक्षाचरणादि । दिवा मा स्वाप्सीः स्पष्टम् । आचार्याधीनः तच्छासने तिष्ठन् वेदमधीष्व इति मन्त्रार्थः ॥ १ ॥

**द्वादशवर्षाणि वेदब्रह्मचर्यम् ॥ २ ॥**

वेदस्य ब्रह्मचर्यमित्येकवचनान्तस्य समासः । एकस्य वेदस्य द्वादशवर्षाणि ब्रह्मचर्यं, द्वयोश्चतुर्विंशतिः, त्रयाणां षट्त्रिंशत्, चतुर्णामष्टाचत्वारिंशत् । तथा चापस्तम्बः—'उपेतस्याचार्यकुले ब्रह्मचारिवासः । अष्टाचत्वारिंशद्वर्षाणि । पादोनम् । अर्धेन । त्रिभिर्वा । द्वादशावरार्ध्यम्' इति ॥ २ ॥

**ग्रहणान्तं वा ॥ ३ ॥**

अथवा यावता कालेन यो वेदो गृहीतो भवति, तावन्तं कालं तस्य ब्रह्मचर्यम् । पूर्वोक्तात् कालात् प्रागूर्ध्वं वा । एवं ब्रुवता त्रिविधं स्नानं प्रदर्शितं भवति । यथाह याज्ञवल्क्यः—

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥"

इति ॥ ३ ॥

**सायंप्रातर्भिक्षेत ॥ ४ ॥**

यावदात्मने चाचार्याय च पर्याप्तं तावद् भिक्षेत। आत्मन एव वा ॥ ४ ॥

**सायंप्रातः समिधमादध्यात् ॥ ५ ॥**

पुनः सायंप्रातर्ग्रहणं तावन्मात्रप्रयुक्तं समिदाधानं यथा स्यात्। तेन भोजने सति भिक्षाचरणं भवति। असति नास्ति। समिदाधानं तु नित्यम् ॥ ५ ॥

**अप्रत्याख्यायिनमग्रे भिक्षेत ॥ ६ ॥**

*आदौ ह्रस्वश्छान्दसः। अपपाठो वा। यो न प्रत्याचष्टे तं प्रथमं भिक्षेत। ततो यथासम्भवम् ॥ ६ ॥

**अप्रत्याख्यायिनीं वा ॥ ७ ॥**

एवंभूतां स्त्रियं वा प्रथमं भिक्षेत ॥ ७ ॥

**भिक्षां भवान् ददात्विति ॥ ८ ॥**

अनेन मन्त्रेण सर्वेषां वर्णानां पुरुषं प्रति याचनम्। यदा तु स्त्री याच्यते तदा भिक्षां भवती ददात्विति ॥ ८ ॥

**अनुप्रवचनीयमिति वा ॥ ९ ॥**

अनुप्रवचनीयं भवान् ददात्विति वा भिक्षां याचते। अस्मादेवं ज्ञायते — अनुप्रवचनीयार्थं भिक्षान्तरमिदं, न सायंप्रातर्भिक्षाचरणे गुणविधिरिति। तत्र मनुराह —

"भवत्पूर्वं चरेद् भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥

इति ॥ ९ ॥

* 'अप्रत्याख्यायिनम्' इति पाठं मन्यते।

**तदाचार्याय वेदयित्वा तिष्ठेदहःशेषम् ॥ १० ॥**

तल्लब्धमाचार्याय निवेद्य तस्मिन्नहनि यच्छिष्टं तावन्तं कालं तिष्ठेत् आसनादि न कुर्यात् ॥ १० ॥

**अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयित्वाचार्याय वेदयीत ॥ ११ ॥**

अस्तमित इत्युच्यते । कस्मिन्नस्तमिते, आदित्ये । कुत एतत् तिष्ठेदहःशेषमित्युक्तत्वात्, प्रसिद्धेश्च । ब्रह्मौदनं वक्ष्यति 'ब्राह्मणान् भोजयित्वे'ति[1] । तेनासौ ब्रह्मौदनः अनुप्रवचनीयः । 'सावित्रीं भो अनुब्रूहि' 'सावित्रीमन्वाहे'ति च - सावित्र्यनुप्रवचनं विहितम् । तन्निमित्तोऽयं स्थालीपाकः । तत्र 'तदस्य' 'प्रयोजनमि'त्यधिकारे 'अनुप्रवचनादिभ्यश्छः' निमित्तमपि प्रयोजनमुच्यते यथा रक्षोहागमलघ्वसन्देहाः प्रयोजनमित्यत्रागमः प्रयोजनं व्याकरणस्येति । तं श्रपयति ब्रह्मचारी स्थालीपाकं श्रपयित्वाचार्याय वेदयति ॥ ११ ॥

**आचार्यः समन्वारब्धे जुहुयात् सदसस्पतिमद्भुतमिति ॥ १२ ॥**

अथाचार्यः समन्वारब्धे कुमारे जुहोति सदसस्पतिमिति मन्त्रेण ॥ १२ ॥

**सावित्र्या द्वितीयम् ॥ १३ ॥**

सावित्र्या प्रकृतया द्वितीयं होमं जुहोति । उपदेशादेव सिद्धे द्वितीयवचनमधिकारार्थम् ॥ १३ ॥

---

१. 'येदिति' ग. पाठ.

यद्यच्चात ऊर्ध्वमनूक्तं स्यात् ॥ १४ ॥

द्वितीयमिति वर्तते । अतः सावित्र्यनुप्रवचनादूर्ध्वं यद्यदनूक्तम् अनुब्रूहीति चोदितं वा । यथाह — 'महानाम्नीर्भो अनुब्रूहीति समील्यानुब्रूयादि'ति । तच्च तत्र द्वितीयं[1] भवति । तत्र होमे विप्रतिपत्तिः यथा सावित्र्या होमस्तथात्रापि महानाम्नीभिर्होम इति केचित् । अपरे महानाम्नीभ्यः स्वाहेति होममिच्छन्ति । एवं महाव्रतानुप्रवचने व्रतमनुयुज्यानुक्रोशिने प्रब्रूया'दुच्चरमहरि'ति 'महाव्रताय स्वाहे'ति होमः उपनिषदनुप्रवचने 'उपनिषदे स्वाहे'ति । अनयोस्तु पक्षान्तरस्यासम्भव एव ॥ १४ ॥

ऋषिभ्यस्तृतीयम् ॥ १५ ॥

वचनादेकोऽयं होम ऋषिभ्यः स्वाहेति । न तु वसिष्ठादिभ्यो होमः ॥ १५ ॥

सौविष्टकृतं चतुर्थम् ॥ १६ ॥

वचनादाज्यभागौ न भवतः । तयोर्हि सतोः षष्ठः स्यात् ॥ १६ ॥

ब्राह्मणान् भोजयित्वा वेदसमाप्तिं वाचयीत ॥ १७ ॥

ब्रह्मौदनमिति पूर्वमुक्तत्वात् तद्धुतशिष्टाद् ब्राह्मणभोजनम् । तैर्भुक्तवद्भिर्वेदसमाप्तिरस्त्विति वाचयीत वाचयेत ॥ १७ ॥

अत ऊर्ध्वमक्षारलवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा ॥ १८ ॥

---

१ 'व्रतं' क ख ङ. पाठ

अतोऽनुप्रवचनीयादूर्ध्वमस्यैते भवन्ति । अक्षाराशित्वमलवणभोजित्वमधःशायित्वं च । क्षारमम्लं लकुचादि । त्रिरात्रादयो नियमस्य कालाः । उपदेशक्रमादेव सिद्धे अत ऊर्ध्वमिति वचनं पूर्वेण सह सम्बन्धकरणार्थं, प्राग् भोजने नियमो मा भूदिति । तेन भुक्तवत उपनयनं सिद्धं भवति । यथाहापस्तम्बः —'आशिषो वाचयित्वा कुमारं भोजयित्वे'ति । ब्रह्मचारिग्रहणमाचार्यस्य मा भूदिति ॥ १८ ॥

**चरितव्रताय मेधाजननं करोति ॥ १९ ॥**

चरितव्रताय योऽयं नियम उक्तः तस्यान्त इत्यर्थः । मेधाजननमिति वक्ष्यमाणस्य कर्मणो नामधेयम् । चरितव्रतायेत्येतदपि सम्बन्धार्थमेव । तेन यत्र मेधाजननं तत्र व्रतचर्या तत्रानुप्रवचनीयमित्येवमादि सिद्धम् । तेन 'कृताकृतं केशवपनं मेधाजननं चे'त्यत्र व्रतचर्यानुप्रवचनीये इत्यपि न भवतः ॥ १९ ॥

**अनिन्दितस्यां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिश्चन्तं वाचयति सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सुश्रवसं कुरु यथा त्वं देवाना यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति ॥ २० ॥**

अनिन्दितस्यामितिच्छान्दसं रूपम् । यथा 'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यामि'ति । तिस्रो दिशो

निन्दिताः दक्षिणा प्राग्दक्षिणा प्रत्यग्दक्षिणेति । एकमूलमशाखाजम् । शाखाजस्य हि द्वे मूले भवतः, पूर्वं यस्य शाखा छित्वा निर्मिता निर्मितायाश्च शाखाया इदानीमपरेति । मूलप्रदेशे शाखारहितमित्येके । पलाशापचार इति सर्वथानेकमूलस्यापि पलाशस्याभाव एव कुशस्तम्बपरिग्रहार्थम् । तं ब्रह्मचारी त्रिः परिषिञ्चति । आचार्यस्त्रिर्वाचयति सुश्रवः सुश्रवा असीत्येवं मन्त्रम् । यद्यपि सुश्रवा इति पलाशस्याभिधानं देवानां ब्रह्मवादं वदतां, 'यद्गुपाशृणोः सुश्रवा वै श्रुतोऽसी'ति दर्शनात्, तथापि कुशस्तम्बेऽपि मन्त्रो भवत्येव वचनाद् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इतिवत् । समाप्तमुपनयनम् ॥२०॥

एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातम् ॥ २१ ॥

एतेनोपनयनेन व्रतादेशनं व्याख्यातम् । वापनादिग्रहणमलङ्कारनिवृत्त्यर्थम् । 'काय त्वा परिददामी'त्येतत् परिदानम् । परिदानान्तमित्युत्तरकर्मनिवृत्त्यर्थम् ॥ २१ ॥

इत्यनुपेतपूर्वस्य ॥ २२ ॥

एवमनुपेतपूर्वस्योपनयनमुक्तम् ॥ २२ ॥

अथोपेतपूर्वस्य ॥ २३ ॥

अथ अनन्तरो वेदान्तरे उपेतपूर्वो य इमं वेदमध्येतुमिच्छति तस्योपनयने विशेषो वक्ष्यते । एवं गुरुरेतद् ज्ञापयति तेन तेन प्रकारेण प्रतिवेदमुपनयनं कर्तव्यमिति । अन्ये तु सकृदुपनयनं सर्ववेदार्थं मन्यन्ते । यथाऽऽपस्तम्बः—'सर्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति ब्राह्मणमि'ति ॥ २३ ॥

**कृताकृतं केशवपनं मेधाजननं च ॥ २४ ॥**

कृताकृतं क्रियतांवा मा कारीत्यर्थः ॥ २४ ॥

**अनिरुक्तं परिदानम् ॥ २५ ॥**

निरुक्तमभिहितम् । परिदीयते यस्मिन् कर्माणि तत् परिदानं, यदभिहितं परिदानं तदत्र न भवतीत्यर्थः । न परिदानमित्येव सिद्धे अनिरुक्तमिति वचनमुत्तरार्थम् ॥ २५ ॥

**कालश्च ॥ २६ ॥**

यो निरुक्तः कालः सोऽत्र न भवति । अत्र यस्यकस्यचित् कालस्यावर्जनीयत्वादुक्तकालस्य प्रतिषेधो विधेयः । तदर्थं पूर्वत्रानिरुक्तवचनम् । अभिहितः कालोऽष्टमवर्षादिरत्र न भवतीति । अनारभ्यमाणे एतस्मिन् यावतो वेदानध्येतुं शक्नोति कुमारस्तावन्त्युपनयनानि तास्मिन्नेव काले स्युरिति सूत्रारम्भः ॥ २६ ॥

**तत्सवितुर्वृणीमह इति सावित्रीम् ॥ २७ ॥**

सावित्रीं भो अनुब्रूहीत्युक्ते इमामनुब्रूयात् सदा वेमां जपेत् ॥ २७ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये एकोनविंशः खण्डः ।

---

१. 'चेमां' घ. पाठः. २. 'दान् ज' ख. पाठः.

अथ विंशः खण्डः।

ऋत्विजो वृणीतेऽन्यूनानतिरिक्तान् ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥ १ ॥

वृणीते सम्भजते (कामा?कर्मा)र्थं परिगृह्णाति। अन्यूना अनतिरिक्ताश्च प्रमाणपरिमाणाभ्याम्। प्रमाणतो नातिदीर्घा-न्नातिह्रस्वान् परिमाणतो न त्र्यङ्गुलीन् न षडङ्गुलीन्। एवमाकारतो गुणा उक्ताः। चरित्रत आह—ये मातृत इति ॥१॥

युवान ऋत्विजो वृणीत इत्येके ॥ २ ॥

द्वितीयार्थे प्रथमा। युवान ऋत्विजो भवन्ति तान् वृणीत इति वा। एक इति वचनादन्ये[1] कर्मसमर्थानां वरण-मिच्छन्ति। ऋत्विगधिकारे पुनर्ऋत्विग्ग्रहणमनृत्विजां चम-साध्वर्यूणां युवत्वं मा भूदिति ॥ २ ॥

ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युम-थोद्गातारम् ॥ ३ ॥

प्रथमग्रहणमेवकारं च कुर्वन्नुपदेशक्रमस्याविवक्षां द-र्शयति। तेन होत्रादीनामनियतक्रमो भवति अथशब्दे स-त्यपि ॥ ३ ॥

सर्वान् वा येऽहीनैकाहैर्याजयन्ति ॥ ४ ॥

सर्वान् वा ऋत्विजो वृणीते चतुर एव वा। येऽहीनैकाहैर्याजयन्तीति वचनात् सोमयागेष्वेव मन्त्रवद्वरणं भवति ॥ ४ ॥

---

१. 'न्ये प्रकृतक' घ. पाठः.

**सदस्यं सप्तदशं कौषीतकिनः समामनन्ति ॥ ५ ॥**

कौषीतकिनः शाखाविशेषाध्यायिनः, ते सदस्यं सप्तदशमृत्विजं समामनन्ति । सप्तदशग्रहणं नियमार्थं, कथम्, एक एव सदस्यः स्याद् इति 'प्रयन्तु सदस्यानामि'ति प्रैषे बहुवचननिर्देशादनेकसदस्या उक्ताः ॥ ५ ॥

तस्य व्यापारमाह—

**स कर्मणामुपद्रष्टा भवतीति तदुक्तमृग्भ्यां यमृत्विजो बहुधा कल्पयन्त इति ॥ ६ ॥**

सदस्योऽभिधूयते ततश्च सदस्यसद्भावः तस्योपद्रष्टृत्वं च प्रतिपादितं भवति ॥ ६ ॥

**होतारमेव प्रथमं वृणीते ॥ ७ ॥**

पूर्वं 'ब्रह्माणमेव प्रथममि'त्युक्तम् । इदानीं होतारं प्रथममित्युच्यते । तदनयोर्होतृब्रह्मणोः प्राप्तयोर्विकल्पः । अपर आह — यदा चतुर्णां वरणं तदा ब्रह्मण एव प्रथमं, यदा सर्वेषां तदा होतुरेवेति व्यवस्थितो विकल्प इति ॥ ७ ॥

वरणे मन्त्रानाह —

**अग्निर्मे होता स मे होता होतारं त्वामुं वृण इति होतारम् ॥ ८ ॥**

होत्रधिकारे पुनः होतृग्रहणं यदा द्वितीयं होतारं वृणीते तदाप्ययं मन्त्रो यथा स्यादिति । अन्यथा प्रथमं व्रियमाणे समाम्नानान्न स्यात् । अमुमिति सर्वनामस्थाने व्रियमाणस्य नामनिर्देशो द्वितीयया होतारं त्वा यज्ञशर्माणमिति ॥ ८ ॥

चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वामुं वृण इति ब्रह्माणम् ॥ ९ ॥

अयं ब्रह्मणो वरणमन्त्रः। उत्तरेषामपि प्रदर्शनार्थं कृत्स्नं पठितम् ॥ ९ ॥

आदित्यो मेऽध्वर्युरित्यध्वर्युम्। पर्जन्यो म उद्गातेत्युद्गातारम्। आपो मे होत्राशंसिन्य इति होत्रकान्। रश्मयो मे चमसाध्वर्यव इति चमसाध्वर्यून्। आकाशो मे सदस्य इति सदस्यम् ॥ १० ॥

आदित्यो मेऽध्वर्युः स मेऽध्वर्युरध्वर्यु त्वामुं वृणे। पर्जन्यो म उद्गाता स म उद्गातोद्गातारं त्वामुं वृणे। आपो मे होत्राशंसिन्यस्ता मे होत्राशंसिन्यो होत्राशंसिनीर्वोऽमूर्वृणे। रश्मयो मे चमसाध्वर्यवस्ते मे चमसाध्वर्यवश्चमसाध्वर्यून् वोऽमून् वृणे। आकाशो मे सदस्यः स मे सदस्यः सदस्यं त्वामुं वृणे इतीतरेषां वरणमन्त्राः ॥ १० ॥

स वृतो जपेद् महन्मेऽवोचो भर्गो मेऽवोचो भगो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचस्तृप्तिं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोच इति ॥

वृत इति वचनात् सर्वस्य वृतस्य जपो भवति, नानन्तरस्यैव सदस्यस्य। सग्रहणं जपस्य वरणस्य चानन्तर्यार्थम्। अन्यथा सर्वान्ते जपस्योपदेशात् सदस्यवरणानन्तरमेव सर्वे जपेयुः। सग्रहणात्तु वरणानन्तरमेव जपो भवति ॥ ११ ॥

जपित्वाग्निष्टे होता स ते होताहं ते मानुष इति होता प्रतिजानीते ॥ १२ ॥

प्रतिज्ञानमभ्युपगमः । जपे प्रकृते पुनर्जपित्वेति वचनं कथम् । अन्यमपि जपं जपित्वैव प्रतिजानीत इत्येवमर्थम् । कः पुनरसौ । 'तन्मावतु तन्मा विशतु तेन भुक्षिषीये'त्येषः । कस्मात् पुनः सोऽपि जप इहैव न पठ्यते । कारणमुत्तरत्र वक्ष्यामः ॥ १२ ॥

**चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ॥ १३ ॥**

अहं ते मानुष इत्यनुषज्यते । प्रतिजानीत इत्येव ॥

**एवमितरे यथादेशम् ॥ १४ ॥**

अध्वर्य्वादयो यथादेशं येन प्रकारेण वरण आदेशनं कृतं तदनुरूपं प्रतिजानते । तद्यथा — आदित्यस्तेऽध्वर्युः स तेऽध्वर्युरहं ते मानुषः, पर्जन्यस्त उद्गाता स त उद्गाताहं ते मानुषः, आपस्ते होत्राशंसिन्यस्तास्ते होत्राशंसिन्यो वयं ते मानुषाः, अहं ते मानुषः इति वा प्रत्येकम्, रश्मयस्ते चमसाध्वर्यवस्ते ते चमसाध्वर्यवो वयं ते मानुषाः, आकाशस्ते सदस्यः स ते सदस्योऽहं ते मानुष इति ॥ १४ ॥

**तन्मावतु तन्मा विशतु तेन भुक्षिपीयेति च याजयिष्यन् ॥ १५ ॥**

यो याजयिष्यन् भवति स एवं जपित्वा प्रतिजानीते । प्रत्याचक्षाणस्तु नेत्येवमर्थं याजयिष्यान्निति वचनम् । प्रत्याख्यानविषयावतरणार्थं चैतत् । अपर आह — याजयिष्यत एवायं जपशेषः पूर्वस्त्वयाजयिष्यतोऽपीति । अस्ति

पुनः कश्चिदयाजयिष्यन्नपि वृतः, अस्तीत्याह, यथा चमसाध्वर्यवः । अथ तेऽपि होमसंयोगाद् याजयिष्यन्तो भवन्ति । एवमप्याधाने ये व्रियन्ते ते याजयिष्यन्तो न भवन्ति तत्र यागाभावात् । इष्टयस्तु पृथग्भूताः, न तदङ्गं तद्वरणम् । तेन ते याजयिष्यन्तो न भवन्तीति य एवमाहुः ते सोमयागादन्यत्रापि मन्त्रवन्नियमवद्वरणमिच्छन्ति । तेषां तत्र मधुपर्कोऽपि प्राप्नोति । न चैव क्वचिदप्यनुष्ठीयते । येऽहीनैकाहैर्याजयन्तीति च पुरस्तादुक्तम् । तस्माद् यथा वयमवोचाम तथैव युक्तम् । कस्मात् पुनरयं जपशेषस्तत्रैव नोक्तः । सर्वशेषत्वात् । सर्वेषां ह्ययं साधारणः शेषः पूर्वोऽशो भिद्यते ॥

न्यस्तमार्त्विज्यमकार्यम् ॥ १६ ॥

न्यस्तमन्यस्मै दत्तं प्रतिश्रुतं वा । अपित्रा तेन त्यक्तमित्यन्ये । एवंभूतमार्त्विज्यं न कर्तव्यम् ॥ १६ ॥

अहीनस्य ॥ १७ ॥

आर्त्विज्यमकार्यमित्येव । श्रूयते च 'तस्माद् द्वादशाहेन न याज्यमि'ति । नचैवमहीनानामुपदेशानर्थक्यं व्रात्यस्तोमादिवदतिक्रान्तनिषेधानामप्यृत्विजां सम्भवात् ॥ १७॥

नीचदक्षिणस्य ॥ १८ ॥

नीचाल्पीयसी दक्षिणा यस्य । बहुवित्तस्यापि सतः तस्यार्त्विज्यमकार्यम् । क्रतुस्तु यो वा को वा भवतु । अन्ये त्वहीनस्य नीचदक्षिणस्येत्येकमेव विषयं मन्यन्ते । नीचद-

क्षिणस्याहीनस्यार्त्विज्यं न कार्यं, बहुदक्षिणस्य तु कार्यमेवेति। श्रूयते च 'ददतं वैते तमयाजयंस्तस्माद्ददद्याज्य' इति॥ १८॥

**व्याधितस्यातुरस्य यक्ष्मगृहीतस्य अनुदेश्याभिशस्तस्य क्षिप्तयोनेरिति चैतेषाम्॥ १९॥**

व्याधितो ज्वरादिगृहीतः। आतुरोऽलसः। यक्ष्मगृहीतः क्षयरोगी। प्राधान्यादस्य पृथग्ग्रहणमवश्यं वर्जनार्थम्। अनुदेश्यः समीपवर्ती तेन योऽभिशस्यते तथ्यमतथ्यं वा दुष्कर्मायमिति। यस्य माता व्यभिचारिणी स क्षिप्तयोनिः। इति चैतेषाम् अन्येषामप्येवंप्रकाराणामार्त्विज्यं न कर्तव्यम्॥ १९॥

**सोमप्रवाकं परिपृच्छेत् को यज्ञः क ऋत्विजः का दक्षिणेति॥ २०॥**

सोमं यः प्रथमं वक्ति असौ सोमेन यक्ष्यते स होतारं वृणीत इति स सोमप्रवाकः। कर्मण्यण्। न्यङ्क्वादिपुदर्शनात् कुत्वम्॥ २०॥

**कल्याणैः सह सम्प्रयोगः॥ २१॥**

याज्यो यत्र ऋत्विजो दक्षिणाश्च यत्र कल्याणाः तत्र कर्म कर्तव्यमिति॥ २१॥

**न मांसमश्नीयुर्न स्त्रियमुपेयुरा क्रतोरपवर्गात्॥ २२॥**

ऋत्वादेः प्रभृत्या समाप्तेरेतौ नियमौ भवतः ऋत्विजाम्॥ २२॥

**एतेनाग्ने ब्रह्मणा वावृधस्वेति दक्षिणाग्नावाज्याहुतिं हुत्वा यथार्थं प्रव्रजेत् ॥ २३ ॥**

य आर्त्विज्यं करोति तस्य तत्समाप्ताविदं नैमित्तिकमुच्यते । एतेनाग्ने इत्यृचा दक्षिणाग्नावाज्याहुतिं जुहुयात् ततो यथार्थं प्रव्रजेत् । देशान्तरगमनमांसाशनादिकमस्य न प्रतिषिध्यते । पूर्वं तु प्रतिषिध्यत इति ॥ २३ ॥

**एवमनाहिताग्निर्गृह्य इमामग्ने शरणिं मीमृषो न-इत्येतयर्चा ॥ २४ ॥**

हुत्वा यथार्थं प्रव्रजेदिति वर्तते । अनाहिताग्नेरार्त्विज्यं कृतवत ऋगग्निश्च भिद्यते । अन्यत् समानम् । पादग्रहणादेव सिद्धे ऋचेति वचनं विस्पष्टार्थम् । ऋत्विग्भ्यो मधुपर्को देय इति वक्ष्यते । तत्र के त ऋत्विज इत्यपेक्षामपनेतुमिहर्त्विग्वरणमाम्नातम् ॥ २४ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
प्रथमाध्याये विंशः खण्डः ।

---

अथैकविंशः खण्डः ।

**ऋत्विजो वृत्वा मधुपर्कमाहरेत् ॥ १ ॥**

दद्यात् । वृत्वेति वचनाद् वरणानन्तरमेव ऋत्विजां मधुपर्कः, न प्रत्यहम् ॥ १ ॥

**स्नातकायोपस्थिताय ॥ २ ॥**

स्नातकः कृतसमावर्तनः । तस्मै उपस्थिताय—गुरुकुलादागताय मधुपर्कमाहरेत् । तत्र मनुः—

"तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणं तल्प आसीनमर्हयेत् प्रथमं गवा ॥"

इति ॥ २ ॥

राज्ञे च ॥ ३ ॥

मधुपर्कमाहरेदित्येव । अविशेषवचनात् प्रत्यागमनं राज्ञे मधुपर्कः ॥ ३ ॥

आचार्यश्वशुरपितृव्यमातुलानां च ॥ ४ ॥

चतुर्थ्यर्थे षष्ठी । एतेभ्यः प्रतिसंवत्सरमुपतिष्ठद्भ्यो देयः । यथाहापस्तम्बः—'आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्य एतत् कार्यम्'। 'सुकृत प्रवक्रे चित्राये'ति[2] ॥ ४ ॥

दधनि मध्वानीय सर्पिर्वा मध्वलाभे ॥ ५ ॥

मधुपर्कमाहरेदिति सम्बध्यते । आनयनं निषेचनम्। दधनि मध्वानीय मध्वलाभे वा सर्पिः । स एष मधुपर्कः । मध्वलाभ इति वचनान्न तुल्यविकल्पः ॥ ५ ॥

विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ॥ ६ ॥

विष्टर आसनम् । पादार्थमुदकं पाद्यम् । अर्घार्थमर्घ्यम्। आचमनार्थमाचमनीयम्। मधुपर्क उक्तः। गौः स्त्रीगवी। आपस्तम्बगृह्ये दर्शनात्, 'गौरिति गां प्राहे तां स उत्तरेण यजुषे'ति 'गौर्धेनुभव्ये'ति[4] च मन्त्रे स्त्रीलिङ्गदर्शनात्। एतेषां द्रव्याणां

---

१. 'तत्प्रती' ख. पाठः. २. 'पितृव्याये' क. ख. ग. पाठः. ३. 'ह' ग. पाठः. ४. 'वि मन्त्रलिङ्गाच्च ए' ख. पाठः.

मध्ये एकैकं द्रव्यं मधुपर्क्याय त्रिस्त्रिर्निवेदयन्ते[1]। के, दातारः तत्परिचारका वा। तेषां च निवेदनं तत्रावसरे क्रमेण। एतेषामिति वचनमेवंजातीयानां गन्धादीनां मा भूदिति॥ ६।

एवं दातुः कर्तव्यमुक्तम्, मधुपर्क्यस्य कर्तव्यमाह—

**अहं वर्ष्म सजातानां विद्युतामिव सूर्यः। इदं तमधितिष्ठामि यो मा कश्चाभिदासतीत्युदगग्रे विष्टर उपविशेत्॥ ७॥**

विष्टरो विष्टरो विष्टर इति त्रिरुक्त्वा उदगग्रं विष्टरं निदधाति दाता। स च दर्भमयं कूर्चम्। तस्मिन्नुपविशेत् प्रतिग्रहीता अहं वर्ष्मेति मन्त्रेण॥ ७॥

**आक्रम्य वा पादौ प्रक्षालापयीत॥ ८॥**

अथवा नोपविशेत्, पादाभ्यां विष्टरमाक्रम्य पादयोः प्रक्षालनं कारयेत्। प्रक्षालापयीतेति रूपसिद्धिश्चिन्त्या॥ ८॥

**दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत्॥ ९॥**

यदा ब्राह्मणः प्रक्षालयिता तदा तस्मै दक्षिणं पादं पूर्वं प्रयच्छेत्, ततः सव्यम्॥ ९॥

**सव्यं शूद्राय॥ १०॥**

पूर्वोक्तविपरीतम्। क्षत्रियवैश्ययोर्यथारुचि॥ १०॥

**प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्याथाचमनीयेनाचामत्यमृतोपस्तरणमसीति[3]॥ ११॥**

उपदेशक्रमादेव सिद्धे प्रक्षालितपादग्रहणमानन्तर्यार्थम्। तेन गन्धमाल्यादीनामर्हणाद्रव्याणां पश्चात् प्रवृत्तिः।

---

१. 'ते', २. 'त्व' क ख ङ. पाठ. ३. 'नाचामा' क पाठ.

अर्घ्यमञ्जलिना प्रतिगृह्य एतावानर्घ्योपयोगः । केचित् मुखप्रक्षालनमिच्छन्ति । अथशब्दाद् गन्धादीनामुत्कर्षः। आचमनीयेनाचामति आचमनीयमुदकं सकृत् पिबति अमृतोपस्तरणमसीति मन्त्रेण । तत्रान्यच्छौचार्थं विधिवदाचमनं प्रवर्तते । नेत्यन्ये, यथा भोजनोपक्रमे न भवति एवमन्यत्रापीति । ज्ञापकं चात्र वक्ष्यामः ॥ ११ ॥

**मधुपर्कमाह्रियमाणमीक्षते मित्रस्य त्वा चक्षुषा प्रतीक्ष इति ॥ १२ ॥**

मधुपर्कमाहरति दाता । तमाह्रियमाणमीक्षते प्रतिग्रहीता मित्रस्य त्वेत्येनेन ॥ १२ ॥

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तमञ्जलिना प्रतिगृह्य मधु वाता ऋतायत इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य वसवस्त्वा गायत्रेण छन्दसा भक्षयन्त्विति पुरस्तान्निमार्ष्टि ॥ १३ ॥**

तं मधुपर्कमञ्जलिना प्रतिगृह्णाति देवस्य त्वेति मन्त्रेण। ततो मधु वाता इति तृचेनावेक्षते । ततोऽनामिकया उपकनिष्ठिकयाङ्गुल्याङ्गुष्ठेन च त्रिः प्रदक्षिणमालोडयति । आलोड्य वसवस्त्वेति मन्त्रेण पुरस्तान्निमार्ष्टि लेपमपनयति ॥ १३ ॥

**रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्त्विति दक्षिणतः आदित्यास्त्वा जागतेन छन्दसा भक्षयन्त्विति**

---

१. 'ति मन्त्रेण ॥' ख. ग. घ. पाठः.

**पश्चात् विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्त्वित्युत्तरतः ॥ १४ ॥**

एवं रुद्रास्त्वेत्यादिभिर्मन्त्रैर्दक्षिणादि प्रतिदिशं निमार्ष्टि ॥ १४ ॥

**भूतेभ्यस्त्वेति मध्यात् त्रिरुद्गृह्य विराजो दोहोऽसीति प्रथमं प्राश्नीयात् ॥ १५ ॥**

भूतेभ्यस्त्वेति मन्त्रेण मध्यात् त्रिरुद्गृह्णाति ऊर्ध्वमुत्क्षिपति। उद्गृह्य विराजो दोहोऽसीति मन्त्रेण प्रथमं प्राश्नीयात्। प्रथमोपदेशादेव सिद्धे प्रथमवचनमाचार्यप्रवृत्तिकृतम्। एषा प्रवृत्तिराचार्यस्यैवंविधे विषये। तद्यथा 'आयुषे त्वा प्राश्नामीति प्रथममन्नाद्याय त्वेत्युत्तरमि'ति ॥ १५ ॥

**विराजो दोहमशीयेति द्वितीयम् ॥ १६ ॥**

मध्ये शौचार्थमाचमनं न भवति। स्मर्यते च 'सोमे प्राणाहुतिषु मधुपर्के च नोच्छिष्टा भवन्ती'ति ॥ १६ ॥

**मयि दोहः पद्यायै विराज इति तृतीयम् ॥ १७ ॥**

पूर्वयोर्दर्शनादिहापि विराज इति षष्ठ्यन्तं पदं न चतुर्थ्यन्तम् ॥ १७ ॥

**न सर्वम् ॥ १८ ॥**

सर्वं मधुपर्कं न प्राश्नीयात् ॥ १८ ॥

**न तृप्तिं गच्छेत् ॥ १९ ॥**

आ तृप्तेर्न पिबेत् ॥ १९ ॥

**ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेत् ॥ २० ॥**

उच्छिष्टं प्राशितशिष्टं मधुपर्कमुदङ्मुखो ब्राह्मणाय दद्यात् ॥ २० ॥

**अलाभेऽपः ॥ २१ ॥**

यदि ब्राह्मणो न लभ्यते तदापः प्रवेशयेन्मधुपर्कम् ॥ २१॥

**सर्वं वा ॥ २२ ॥**

प्राश्नीयादित्येव । अलाभ इति च । ब्राह्मणस्यालाभे सर्वं वा प्राश्नीयात् ॥ २२ ॥

**अथाचमनीयेनान्वाचामति अमृतापिधानमसीति ॥ २३ ॥**

यत् पूर्वमानीतमाचमनीयं तेन अन्वाचामति अमृतापिधानमसीति यजुषा ॥ २४ ॥

**सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयम् ॥ २४ ॥**

सत्यमित्यादिना यजुषा द्वितीयमाचामति ॥ २४ ॥

**आचान्तोदकाय गां वेदयन्ते ॥ २५ ॥**

अथ शौचार्थं विधिवदाचामति । तस्मै आचान्तोदकाय । एतदेव ज्ञापकं पूर्वत्र मध्ये शौचार्थं नाचमनमिति । उदकग्रहणेनाचमने उदकमेव प्राप्तं दर्शयति । तेन नालिकेराम्ब्वादिभिराचमनं न भवति । तस्मै गां वेदयन्ते गौर्गौरिति ॥ २५ ॥

हतो मे पाप्मा पाप्मा मे हत इति जपित्वोङ्कुरुतेति कारयिष्यन् ॥ २६ ॥

ब्रूयादिति शेषः । क्रियासामान्यवाचिना करोतिना वधो लक्ष्यते । यो वधं गोरनुजानाति स कारयिष्यन् भवति । स हतो मे पाप्मेत्यादि जपित्वा ॐ कुरुतेति ब्रूयात् । ॐ हंतेत्युक्तं भवति ॥ २६ ॥

माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन् ॥ २७ ॥

यः पुनर्गामुत्स्रक्ष्यन् उत्स्रष्टुकामो भवति स माता रुद्राणाम् इति मन्त्रं जपित्वोमुत्सृजतेति ब्रूयात् ॥ २७ ॥

नामांसो मधुपर्को भवति भवति ॥ २८ ॥

मांसरहितो मधुपर्को न भवति । किं मधुपर्के मांसं देयमित्युच्यते[२] मधुपर्के भोजनममांसं न भवतीत्युच्यते । तदनेनाभ्युपायेन मधुपर्के[३] भोजनमुपदिश्यते । द्विरुक्तिरध्यायसमाप्तिकृता ॥ २८ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
अनाविलायां प्रथमाध्याये एकविंशः खण्डः ।
प्रथमाध्यायः समाप्तः ।

---

१. 'मुत्स्रष्टुमिच्छति स' ख. पाठः. २. 'ते । नेत्याह म' क. ख. पाठः. ३. 'र्को नाम भो' ख. पाठः.

## अथ द्वितीयोऽध्यायः।

**श्रावण्यां पौर्णमास्यां श्रवणाकर्म ॥ १ ॥**

मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते।
चान्द्रा मासास्तत्तदन्ताश्चैत्राद्या द्वादश स्मृताः॥
तेषु या या पौर्णमासी सा सा चैत्र्यादिका स्मृता।
कादाचित्केन योगेन नक्षत्रस्येति निश्चयः॥

तदेवं सिंहस्थे सवितरि यामावास्या तदन्ते चान्द्रमसे मासि मध्यवर्तिनी या पौर्णमासी सा श्रावणी। श्रवणयोगस्तु भवतु वा मा वा भूत्। तस्यां श्रवणाकर्म कर्तव्यम्। श्रवणाशब्देनापि श्रावण्येवोच्यते। 'विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य' इति दर्शनात्। तस्यां क्रियत इति श्रवणाकर्म। नामधेयमेतदन्वर्थम्। किं पुनस्तत् यः सर्पबलिरित्याख्यायते। अविशेषवचनात् प्रतिसंवत्सरं भवति ॥ १ ॥

**अक्षतसक्तूनां नवं कलशं पूरयित्वा दर्वीं च बलिहरणीं नवे शिक्ये निदधाति ॥ २ ॥**

तत्राक्षतानां धानानां सक्तवः कर्तव्याः अखण्डितानां यवानां तैर्नवं कलशं पूरयित्वा तं कलशं दर्वीं च बलिहरणीं बलिराह्रियते यया तां च नवे शिक्ये निदधाति ॥ २ ॥

**अक्षतधानाः कृत्वा सर्पिषार्धा अनक्ति ॥ ३ ॥**

अक्षतानां यवानां धानाः कृत्वा तासामर्धाः सर्पिषानक्ति। समप्रविभागोऽयमर्धः। अर्धशब्दो नपुंसकलिङ्ग इति

वैयाकरणाः । वेदे तु स्त्रीलिङ्गोऽपि दृश्यते 'तस्यार्धोः शस्त्वा-
र्धाः परिशिष्ये'ति। सर्पिरसंस्कृतम् । सर्वमेतदहन्येव भवति ॥

**अस्तमिते स्थालीपाकं श्रपयित्वैककपालं च पुरो-
डाशम् अग्ने नय सुपथा राये अस्मानिति चतसृभिः प्रत्यृ-
चं हुत्वा पाणिनैककपालम् अच्युताय भौमाय स्वाहेति ॥**

अस्तमित आदित्ये स्थालीपाकमेककपालं पुरोडाशं च
श्रपयित्वा अग्ने नयेति चतसृभिः प्रत्यृचं स्थालीपाकं जुहोति ।
अच्युताय भौमाय स्वाहेति मन्त्रेण पुरोडाशम् । सर्वहुतोऽयं
पुरोडाशः । कारणमुत्तरत्र वक्ष्यामः । तत्रावदानमर्थलुप्तम् ।
उपस्तरणाभिघारणयोस्तु सव्येन पाणिना प्रवृत्तिमिच्छन्ति ।
इह स्थालीपाकपुरोडाशयोः श्रपणविधानात् सक्तूनां धाना-
नां च विधिवच्छ्रपणं न भवति । यथासिद्धानामेव ग्रह-
णम् । प्रत्यृचग्रहणादृगन्तेन होमः न स्वाहाकारेण ॥ ४ ॥

**अवप्लुतः स्यादाविःपृष्ठो वा ॥ ५ ॥**

अयं पुरोडाशः अवप्लुतः घृते निमग्नः स्यात् प्र-
काशपृष्ठो वा । कस्मिंश्चित् पात्रे निधाय तथा घृतेन परिषेकः
कार्यः यथायं निमग्नो भवति, आविःपृष्ठो वा भवति ॥ ५ ॥

**मा नो अग्नेऽवसृजो अघायेत्येनमाशयेनाभिजु-
होति ॥ ६ ॥**

---

१. 'पौत्र', २. 'शिष्य मध्ये निविद दधाति' ग. पाठ॰.
३. 'लौकिकमस' ग. घ. पाठ　　४. 'हुत्वा अ' ख. पाठ.

एनं पुरोडाशमाशयेन यस्मिन् घृते पुरोडाश आशायितः मग्नः तेन घृतेनाभिजुहोति एनामिति वचनादखण्डितस्यास्य होम इति ज्ञाप्यते ॥ ६ ॥

शं नो भवन्तु वाजिनो हवेष्वित्यक्ता धाना अञ्जलिना ॥ ७ ॥

जुहोतीत्येव । अञ्जलिनेत्युभयोर्हस्तयोर्व्यापृतत्वादुपस्तरणाभिघारणयोरन्यः कर्ता ॥ ७ ॥

अमात्येभ्य इतरा दद्यात् ॥ ८ ॥

अमात्याः पुत्रादयः तेभ्य इतरा अनक्ता धाना दद्यात्। एतावद् गृह्ये करोति ॥ ८ ॥

कलशात् सक्तूनां दर्वीं पूरयित्वा प्रागुपनिष्क्रम्य शुचौ देशेऽपोऽवनिनीय सर्पदेवजनेभ्यः स्वाहेति हुत्वा नमस्करोति ये सर्पाः पार्थिवा ये आन्तरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इमं बलिमाहार्षं तेभ्य इमं बलिमुपाकरोमीति[1] ॥ ९ ॥

अथ शिक्यं गृहीत्वा प्राङ्मुख उपनिष्क्रम्य शुचौ देशेऽपोऽवनिनीय नवात् कलशाद् गृहीतैः सक्तुभिर्दर्वीं पूरयित्वा जुहोति । सर्पदेवजनेभ्यः स्वाहेति हुत्वा नमस्करोति ये सर्पा इति मन्त्रेण । मन्त्रलिङ्गात् सर्पेभ्यो नमस्कारः । शुचौ देश इति वचनाद्धोमत्वेऽप्यग्नेर्निवृत्तिः । शुचाविति वचनात् स्वभावतः शुचेररण्यस्य ग्रहणमिच्छन्ति ॥ ९ ॥

---

१. 'ति अस्योपरि प्रश्च्योतयति । ए' क, ख. पाठः.

प्रदक्षिणं परीत्य पश्चाद् बलेरुपविश्य सर्पोऽसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान् यज्ञेन देवांस्त्वयि मा सन्तं त्वयि सन्तः सर्पा मा हिंसिषुः॥ १०॥

अथ तं बलिं प्रदक्षिणं परीत्य पश्चादस्योपविश्य जपतीत्यध्याहार्यम्। बलिग्रहणेऽक्रियमाणे पश्चाच्छन्दः कालवाची शङ्क्येत। तथा सति पूर्वाहुतिरवस्थितस्य प्राप्नोति। बलिग्रहणाद् दिग्वाची भवति॥ १०॥

ध्रुवान्ते परिददामीति॥ ११॥

परिददातीत्यध्याहार्यम्। साकाङ्क्षत्वान्मन्त्रलिङ्गाच्च। ध्रुवान्ते परिददामीत्येवं परिददाति कस्मै ध्रुवाय सम्बोध्यमानाय। ध्रुवो नाग सर्पाणामधिपतिः। हे ध्रुव! अन्ते अस्य कर्मणोऽन्ते परिददामीति मन्त्रार्थः। ध्रुवान् निश्चलान् ते तुभ्यं परिददामीत्यन्ये॥ ११॥

एवं सामान्योक्तस्य परिदानस्य विभज्य वचनम्—

ध्रुवामुं ते ध्रुवामुं ते इत्यमात्याननुपूर्वं ध्रुव मां ते परिददामीत्यात्मानमन्ततः॥ १२॥

अमुमित्यस्य स्थाने अमात्यानां नामनिर्देशो द्वितीयया ध्रुव! रुद्रं ते ध्रुव! विष्णुं त इति। एवममात्याननुपूर्वं ज्येष्ठक्रमेण परिददाति। अन्ततस्तु ध्रुव! मां ते परिददामीत्यात्मानं परिददाति। अमुमित्यस्य स्थाने मामिति नतु नामनिर्देशः। तत्रार्थात् स्वयंकर्तृकमेतत् कर्म। अन्यकर्तृकत्वेऽप्यधिकारिण एवान्ततः परिदानम्॥ १२॥

नैनमन्तरा व्यवेयुरा परिदानात् ॥ १३ ॥

एनं कर्तारं बलिं चान्तरा न व्यवेयुः मध्ये न गच्छेयुः ॥ १३ ॥

सर्पदेवजनेभ्यः स्वाहेति सायंप्रातर्बलिं हरेदा प्रत्यवरोहणात् ॥ १४ ॥

'मार्गशीर्ष्यां प्रत्यवरोहण'मिति वक्ष्यति। आ तस्मात् सायं प्रातश्च बलिं हरेत् सर्पदेवजनेभ्यः स्वाहेति पूर्वेणैव मन्त्रेण। बलिहरणोपदेशादेव मन्त्रे सिद्धे पुनस्तदुपदेशादन्येषामुपनिष्क्रमणादीनां निवृत्तिः। सक्तवस्तु भवन्ति बलिद्रव्यत्वाद्। दर्वी च भवति 'दर्वी च बलिहरणीमि'ति पूर्वं विशेषितत्वात्। उपविश्यजपादेरपि निवृत्तिः॥ १४ ॥

प्रसङ्ख्याय हैके तावतो बलींस्तदहरेवोपहरन्ति॥

एके आचार्याः आ प्रत्यवरोहणाद् यावत्य आहुतयः सायंप्रातः तावतीः प्रसङ्ख्याय परिगणय्य तदहरेव तदानीमेवोपहरन्ति उपहर्तव्या इत्याहुः ॥ १५ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
द्वितीयाध्याये प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः।

आश्वयुज्यामाश्वयुजीकर्म ॥ १ ॥

अश्वयुग्भ्यां युक्ता पौर्णमासी आश्वयुजी श्रावणी-

वद् द्रष्टव्या । तस्यामाश्वयुजीकर्म भवति श्रवणाकर्मवन्निर्वचनम् ॥ १ ॥

**निवेशनमलङ्कृत्य स्नाताः शुचिवाससः पशुपतये स्थालीपाकं निरुप्य जुहुयुः पशुपतये शिवाय शङ्कराय पृपातकाय स्वाहेति ॥ २ ॥**

निवेशनं गृहं तदुपलेपनादिभिरलङ्कृत्य पशुपतये निरुप्य स्थालीपाकं जुहुयुः पशुपतये शिवायेति मन्त्रेण । पशुपतये निरुप्येति वचनं निर्वापकाले निर्गुणस्य पशुपतेरुपलक्षणं भवति, नतु मन्त्रे यावन्तो गुणाः तावद्गुणकस्य । बहुवचननिर्देशात् पुत्रादयोऽप्यधिकारिणः । तत्र गृही जुहोति इतरेऽन्वाहरन्ते उपासते वा ॥ २ ॥

**पृपातकमञ्जलिना जुहुयाद् ऊनं मे पूर्यतां पूर्णं मे मोपसदत् पृपातकाय स्वाहेति ॥ ३ ॥**

पयस्यवनयेदाज्यं तत् पृपातकमितिच्छन्दोगाः । तदञ्जलिना जुहुयाद् ऊनं मे पूर्यतामिति मन्त्रेण । धानाभिर्होमो व्याख्यातः । अत्र सर्वरुद्रयज्ञेषु दिशामुपस्थानमिति वचनात् 'कद्रुद्राय' 'इमारुद्राया' 'आ ते पितः' 'इमारुद्राय स्थिरधन्वन' इति चतुर्भिः सूक्तैश्चतस्रो दिश उपस्थाय स्विष्टकृदादि ॥

**सजूर्ऋतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्यो देवेभ्यः स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहेत्याहिताग्नेराग्रयणः स्थालीपाकः ॥ ४ ॥**

सजूरित्यादिभिस्त्रिभिर्मन्त्रैराहिताग्नेराग्रयणस्थालीपाको भवति । कः पुनरस्याग्निः गृह्याधिकाराद् गृह्य इति प्राप्तम् । यज्जुहोति तदाहवनीये इति नियमादाहवनीय इति निर्णयः । यद्येवं श्रौताग्रयणप्रकरण एवायमनुकल्पो वक्तव्यः । इह वचने किं प्रयोजनम् । पाकयज्ञधर्मप्रवृत्तिः ॥ ४ ॥

**अनाहिताग्नेरपि शालाग्नौ ॥ ५ ॥**

शालाग्निरपि गृह्य एवोच्यते । ततश्च गृह्याधिकारादेव सिद्धे पुनः शालाग्निग्रहणात् पूर्वं विधानं शालाग्नौ न भवति, क तर्हि आहवनीये ॥ ५ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
द्वितीयाध्याये द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

**मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्यां पौर्णमास्यां वा ॥ १ ॥**

मार्गशीर्षे मासि या चतुर्दशी पौर्णमासी वा तस्यां प्रत्यवरोहणं नाम कर्तव्यं, यस्य 'हेमन्ते प्रत्यवरोहणमि'ति शास्त्रान्तरे प्रसिद्धिः । तत्रापि वक्ष्यति 'हेमन्तं मनसा ध्यायादि'ति । प्राग्घेमन्तात् खट्वादिषु शयितानां शीतकाले पलाशादिनिर्मिते स्वास्तरे शयनार्थं हेमन्तमृतुं प्रति अव-

१. 'न्तम' क. घ. पाठ.

रोहणं प्रत्यवरोहणम् । पौर्णमासीसाहचर्याच्चतुर्दश्यपि शुक्ला गृह्यते, न कृष्णा, नाप्युभे ॥ १ ॥

निवेशनं पुनर्नवीकृत्य लेपनस्तरणोपस्तरणै[१]-रस्तमिते पायसस्य जुहुयुरपश्वेतपदा जहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा न वै श्वेतस्याभ्यागारेऽहिर्जघान किञ्चन । श्वेताय वैदार्वाय नमः स्वाहेति ॥ २ ॥

निवेशनं गृहं तद्वर्षासुच्छिन्नभिन्नं पुनर्नवीकृत्य लेपनादिभिः, तत्र कुड्यानां लेपनं, स्तरणमच्छिद्रीकरणं छदिषाम्, उपस्तरणं निम्नानामुन्नतीकरणम् एवं पुनर्नवीकृत्यास्तमिते पायसं श्रपयित्वा जुहुयुः अपश्वेतपदेति मन्त्राभ्याम् । बहुवचनं पूर्ववत् ॥ २ ॥

नात्र सौविष्टकृत् ॥ ३ ॥

स्विष्टकृदेवसौविष्टकृत् । अकस्मादादिवृद्धिः । सौविष्टकृतमिति वा पाठः । न स्विष्टकृदित्युच्यमाने सर्वथैवास्मिन् कर्मणि स्विष्टकृतः प्रतिषेधः स्यात् । अत्रग्रहणात् प्रधानानन्तरं स्विष्टकृन्न भवतीति प्रतिषेधः स्यात् । यद्येवं माकारि स्विष्टकृतः प्रतिषेधः । मातावदत्रग्रहणं, ज्ञापकं हि भविष्यति सर्वेष्वेव कर्मस्वागन्तुकानामन्ते स्विष्टकृदिति । तस्मात् सर्वत्रैव स्विष्टकृतः प्रतिषेधः । अत्रग्रहणेनापि कर्मैव परामृश्यते विस्पष्टार्थम् ॥ ३ ॥

---

१. 'तीयात्' घ. पाठः.

**अभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपति शिवो नः सुमना भवेति हेमन्तं मनसा ध्यायात् ॥ ४ ॥**

एतदेवात्र प्रत्यवरोहणम् । ध्यानस्य मनोवृत्तित्वादेव सिद्धे मनसेति वचनं मनसा शब्दोच्चारणार्थम् । तच्च हेमन्तेत्यामन्त्रितविभक्त्या भवति ॥ ४ ॥

**पश्चादग्नेः स्वस्तरः स्वस्तीर्णस्तस्मिन्नुपविश्य स्योना पृथिवी भवेति जपित्वा संविशेत् सामात्यः प्राक्छिरा उदङ्मुखः ॥ ५ ॥**

अग्नेः पश्चात् स्वस्तरः स्वस्तीर्णो भवति सुष्ठु आस्तीर्यंत इति स्वस्तरः पलालादिकृता शय्या सः सुष्ठु आस्तीर्णो भवति । उभयत्रच्छान्दसो ह्रस्वः । तस्मिन्नुपविश्य स्योना पृथिवी भवेति जपित्वा संविशेत् शयीत । सामात्यः भार्यया पुत्रैश्च सहितः । प्राक्छिरा उदङ्मुखः । एवंच दक्षिणेन पार्श्वेन संवेशनं भवति ॥ ५ ॥

**यथावकाशमितरे ॥ ६ ॥**

इतरेऽमात्या यथावकाशं संविशेयुः ॥ ६ ॥

**ज्यायान् ज्यायान् वानन्तरः ॥ ७ ॥**

अथवा ज्यायान् ज्यायान् वानन्तरो गृहिणः सर्वेभ्यो ज्येष्ठोऽनन्तरः तदनुजस्तदनन्तर इत्यादि ॥ ७ ॥

**मन्त्रविदो मन्त्रान् जपेयुः ॥ ८ ॥**

तेषाममात्यानां मध्ये ये मन्त्रविदो भवन्ति ते मन्त्रान् जपेयुः। के पुनस्ते मन्त्राः, स्योनापृथिवी भवेति अनन्तरोक्ता वक्ष्यमाणाश्च अतो देवा अवन्तु नः सौर्याणि स्वस्त्ययनानि च॥

संहाय अतो देवा अवन्तु न इति त्रिरेतां दाक्षिणामुखाः प्रत्यङ्मुखा उदङ्मुखाश्च ॥ ९ ॥

'ओहाङ् गतौ' संपूर्वोऽयं शयित्वोत्थायासने वर्तते। दृश्यते

'कलिः शयानो भवति सञ्जिहानस्तु द्वापरः'

इति। संहाय शयनादुत्थाय अतो देवा अवन्तु न इत्येतामृचं दाक्षिणादि (दि) ङ्मुखास्त्रिर्जपेयुः प्रतिदिशं सकृत् सकृत् ॥

चतुर्थं संहाय सौर्याणि स्वस्त्ययनानि च जपित्वान्नं संस्कृत्य ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत॥१०॥

चतुर्थं संहाय चतुर्थं संहानं कृत्वा। चतुर्थवचनाद् ज्ञायते प्रतिदिशं संहाय जप इति । संहानवचनाच्च संवेशनमपि भवति । तत्रापस्तम्बः—'प्रत्यवरोहोचरैर्दक्षिणैः पार्श्वैर्नवस्वस्तरे संविशन्ति। दक्षिणतः पितोत्तरा मातैवमवशिष्टान्[1] ज्येष्ठो ज्येष्ठोऽनन्तरः। संहायोत्तराभ्यां पृथिवीमभिमृशन्ति। एवं संवेशनादि त्रिरि'ति । एवं चतुर्थं संहाय सौर्याणि सूर्यो नो दिव उदुत्यं जातवेदसमित्यादीनि च स्वस्ति नो मिमीतामित्यादीनि च जपित्वान्नं भक्ष्यभोजनादिकं संस्कृत्य गुणवत्कृत्वा तेन ब्राह्मणान् भोजयित्वा तैर्भुक्तवद्भिः स्वस्त्ययनं वाचयीत

१. 'रं व' घ. ग. पाठः. २. 'णा अ' घ. पाठः.

पुण्याहं वाचयेत्। अपर आह — अतो देवा अवन्तु न इति त्रिर्जपेयुरिति एको योगः। अत्र दिशोऽनुक्तत्वात् 'तस्य नित्याः प्राञ्चश्चेष्टा' इति वचनाद् दक्षिणादीनां च वक्ष्यमाणत्वाच्च प्राङ्मुखा इति गम्यते। तत एतामित्यादि चतुर्थमित्यन्तोऽपरो योगः। एतामेवर्चं दक्षिणादिदिङ्मुखाश्च जपेयुः। तत्र पच्छो जपः आनन्तर्येण च दिशां पादैर्योग इति॥ ११॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ द्वितीयाध्याये तृतीयः खण्डः।

---

अथ चतुर्थः खण्डः।

**हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः॥ १॥**

हेमन्तशिशिरयोर्ऋत्वोश्चतुर्णामपरपक्षाणां या अष्टम्यः तास्वष्टका नाम कर्म भवति। यद्यपि द्वयोर्ऋत्वोश्चत्वार एवापरपक्षाः, तथापि चतुर्णामित्युच्यते अधिकमासोपजने पञ्चमनिवृत्त्यर्थम्। किञ्च बहुवचनस्य त्रिष्वेवोपपत्तेश्चतुर्थी न गृह्येत तदर्थं च॥ १॥

**एकस्यां वा॥ २॥**

एकस्यां वाष्टम्यामष्टका भवति। तत्रापस्तम्बः— 'या माघ्याः पौर्णमास्या उपरिष्टाद् व्यष्टका तस्यामष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षत' इति। व्यष्टकापरपक्षः॥ २॥

**पूर्वेद्युः पितृभ्यो दद्यात्॥ ३॥**

पूर्वेद्युः पूर्वस्मिन्नहनि सप्तम्यां पितृभ्यः पितृपितामहप्रपितामहेभ्यो दद्यात्॥ ३॥

**ओदनं कृसरं पायसं चतुःशरावस्य वापूपान् उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा यावतीभिर्वा कामयीत ॥ ४ ॥**

तिलौदनं कृसरं पायसं पयसि शृतमेतेषां त्रयाणां समुच्चयः । तैः सहापूपानां विकल्पः । चतुर्णां शरावाणां समूहः चतुःशरावम् । तत्परिमितैस्तण्डुलैः कृता अपूपाः चतुःशरावस्यापूपाः । एतानि द्रव्याणि समवदाय उदीरतामित्यष्टाभिर्ऋग्भिर्जुहोति । यावत्योऽभिप्रेता ऊर्ध्वमप्यष्टाभ्यस्तावतीभिर्हुत्वा पितृभ्यो दद्यादिति पूर्वेण संबन्धः । पूर्वेद्युरेतानि द्रव्याण्येताभिर्हुत्वा पितृभ्यो दद्यादिति । तत्र होमव्यतिरेकेणापि पितृभ्यो दानं चोदितं भवति । किं पुनरतद्, ब्राह्मणभोजनं पिण्डनिपरणं च ॥ ४ ॥

**अथ श्वोभूतेऽष्टका पशुना स्थालीपाकेन च ॥ ५ ॥**

पूर्वेद्युः कर्म प्रकृतं, ततः श्वोभूतेऽष्टका भवति पशुना स्थालीपाकेन च । चशब्दो विकल्पार्थः अनेकार्था निपाता भवन्तीति । पशुना स्थालीपाकेन वा । पशुशब्देन स्त्रीगवी गृह्यते । आह चापस्तम्बः—'श्वोभूते दर्भेण गामुपाकरोती'ति । अष्टमीष्वष्टकेत्येव सिद्धे श्वोभूतं इति वचनं नियमार्थम् । कथं श्वोभूत एवाष्टका स्यादिति । तेनाष्टम्यामसंभवे लोप एवाष्टकायाः । एतदेव ज्ञापकमन्येषां नियतकालानां

१. 'रं पयसि सस्कृत पायस ते' ख पाठ. २. 'सस्कृत' घ. पाठ.. ३. 'भिर्जु', ४ 'त्वा किं पितृभ्यो ददाति पू' ग. पाठः. ५. 'तेव' ख. ग. पाठ

कारणवशादुत्कर्षेऽप्यलोपो भवतीति। तेन पार्वणमुत्कृष्टमन्यस्मात् पर्वणः कर्तव्यम्। विधिकृन्मुखं तु भवति शास्त्रान्तरवशात्॥ ५॥

**अप्यनडुहो यवसमाहरेत्॥ ६॥**

ग्रासमुष्टिर्यवसम्। अपीत्यल्पत्वे, एतावदपि तावत् कुर्यादिति॥ ६॥

**अग्निना वा कक्षमुपोषेत्॥ ७॥**

कक्षो गुल्मः। उपोषणं दाहः॥ ७॥

**एषा मेऽष्टकेति[2]॥ ८॥**

इति चानयोः कल्पयोर्ब्रूयात्॥ ८॥

**न त्वेवानष्टकः स्यात्॥ ९॥**

अष्टकाकाले तूष्णीं न स्थातव्यं सर्वथा किञ्चित् कर्तव्यमित्युक्तं भवति। एते चत्वारः कल्पा यथापूर्वं गरीयांसः॥ ९॥

**तां हैके वैश्वदेवीं ब्रुवते॥ १०॥**

हशब्दो वाक्यालङ्कारे। तामष्टकामेके आचार्याः वैश्वदेवीं ब्रुवते विश्वे देवा देवतेति। होममन्त्रेषु बहुदेवतासंकीर्तनात्॥ १०॥

**आग्नेयीमेके॥ ११॥**

अग्ने नयेति दर्शनात्। अस्मिन् पक्षे देवतान्तरसंकीर्तनं गुणभावेन। एवमुत्तरत्रापि॥ ११॥

---

१. 'पिशब्दोऽनुकल्पतां द्योतयति। ए', २ 'का। इ', ३. 'वचनमन', ४. 'ह्वीनां देवतानां सं' ग पाठः.

**सौर्यामेके ॥ १२ ॥**

'ग्रीष्मो हेमन्त' इति मन्त्रे 'अधिपतिः प्राणेद' इति सूर्यस्याभिधानं मन्यन्ते ॥ १२ ॥

**नक्षत्रदेवतामेके ॥ १३ ॥**

अत्र शास्त्रान्तरं मृग्यम् ॥ १३ ॥

**रात्रिदेवतामेके ॥ १४ ॥**

शास्त्रान्तरेषु 'यां जनाः प्रतिनन्दन्ती'त्यष्टकाहोम उक्तः, तदभिप्रायमेतत् ॥ १४ ॥

**ऋतुदेवतामेके ॥ १५ ॥**

'ग्रीष्मो हेमन्त' इति दर्शनात्[1] ॥ १५ ॥

**पितृदेवतामेके ॥ १६ ॥**

'वह वपां जातवेदः पितृभ्य' इति दर्शनात् ॥ १६ ॥

**प्राजापत्यामेके ॥ १७ ॥**

'प्रजापतिर्मयि परमेष्ठी' 'प्रजापते न त्वदि'ति दर्शनात् । तत्र पितृदेवतेति निर्णयः । स्मर्यते हि 'अष्टका पितृदेवत्ये'[2] इति । प्रसिद्धिरप्येवमेव । तेन प्राचीनावीतमेव भवति सर्वत्र ॥ १७ ॥

**पशुकल्पेन पशुं संज्ञप्य प्रोक्षणोपाकरणवर्जं वपामुत्खिद्य[3] जुहुयात् वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान् पराके मेदसः कुल्या उपैनान् स्रवन्तु सत्या एतामाशिषः सन्तु सर्वाः स्वाहेति ॥ १८ ॥**

१. 'ण इ' क. पाठ. २ 'त्यादिद' ख. पाठः. ३. 'ध उत्कृत्य जु' क. पाठः.

'अथ पशुकल्प' इत्यत्रोक्तेन पशुं संज्ञप्य मारयित्वा प्रोक्षणोपाकरणवर्जं प्रोक्षणमुपाकरणं चेति द्वे एते कर्मणी वर्जयित्वा वपामुत्खिद्य जुहुयात् वह वपामिति मन्त्रेण। पशुचोदनयैव सिद्धे पशुकल्पेनेति वचनं पशुकल्पस्यैव प्रोक्षणस्य प्रतिषेधो यथा स्यात् स्थालीपाकधर्मस्य पार्वणेप्राप्तस्य प्रतिषेधो मा भूदिति। तेन पशुपक्षेऽपि तदङ्गभूते स्थालीपाके प्रोक्षणं भवत्येव। वपामुत्खिद्येति वचनं सर्वेष्वपि देवताविकल्पेषु वह वपामित्यनेन मन्त्रेण होमो यथा स्यादिति, यदुत्खिद्य जुहुयात् तदनेन मन्त्रणेति, अन्यथा पितृदेवत्यायामष्टकायां न स्यात् पितृलिङ्गत्वात्। येषां तु पितृदेवत्यैवाष्टकेति निर्णयः तेषां प्राप्तानुवाद एवायम्॥ १८॥

अथावदानानां स्थालीपाकस्य च अग्ने नय सुपथा राये अस्मानिति द्वे। ग्रीष्मो हेमन्त ऋतवः शिवा नो वर्षाः शिवाभया शरन्नः। संवत्सरोऽधिपतिः प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा। शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं कृणोतु। शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परिपान्तु विश्वतः स्वाहा। आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रोऽपहन्तु पापं भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माभिगुप्तः स्वाराक्षाणि स्वाहा। विश्व आदित्या वस-

१. 'क्रम्य' ग. पाठः. २. 'णतः प्रा', ३. 'धव' ग. घ. पाठः.
४. 'हवन्तु' ख. पाठः.

**वश्च देवा रुद्रा गोप्तारो मरुतः सदन्तु । ऊर्जं प्रजाममृतं पिबमानः प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा । प्रजापते न त्वदेतान्यन्य इति ॥ १९ ॥**

जुहुयादिति वर्तते । द्वितीयार्थे षष्ठी । तान्येकादश पशोरवदानानि स्थालीपाकं च जुहुयाद् अग्ने नयेत्यादिभिः सप्तभिर्मन्त्रैः । द्विविधः स्थालीपाकः पशुपक्षे पश्वङ्गभूतः पशुकल्पेऽभिहितः । इह च स्वतन्त्रः पशोः प्रत्याम्नायः । तयोरुभयोरप्येते होममन्त्राः ॥ १९ ॥

**सौविष्टकृत्यष्टमी ॥ २० ॥**

स्विष्टकृत आहुतिरष्टमी भवति । तासामाहुतीनां तत्र सौविष्टकृती न विधेया प्राप्तत्वात्, संख्यातैश्चाष्टमी भवेति । तस्मादनर्थको योगः । नानर्थकः, पशुपक्षेऽङ्गभूतो यः स्थालीपाकः तस्यावदानैः सह वा होमो भवति पृथग्वेति पुरस्तादुक्तम् । तत्र पृथग्घोमप्रतिषेधार्थमिदम् । यदि पृथग्घोमः स्यात् सौविष्टकृत्यष्टमी न स्यात् । कथम्, अवदानानां सप्ताहुतयः, स्थालीपाकस्य च सप्त । ततः सौविष्टकृती पञ्चदशी स्यात् सहपक्षे त्वष्टमी भवति ॥ २० ॥

**ब्राह्मणान् भोजयेदित्युक्तम् ॥ २१ ॥**

ब्राह्मणान् भोजयेदित्येव सिद्धे इत्युक्तमिति वचनं 'नवावरान् भोजयेदयुजो वे'त्यन्वष्टक्ये विशेषो वक्ष्यते तत्परिग्रहार्थम् । वक्ष्यमाणेऽप्युक्तमिति व्यवहार आचार्याणां दृश्यते । इह पिण्डनिपरणं न भवति अनुपदेशात् । तथाचापस्तम्बो

१. 'म' ख. पाठ. २ 'सौविष्टकृत्याहु' ग. पाठ. ३. 'ता चाष्ट' ख. पाठ. ४. 'विष्यति', ५. 'कव' क. ख. पाठ.

मध्यमाष्टकायामाह—'स्विष्टकृत्प्रभृति समानमा पिण्डनिधानात्।' 'अन्वष्टकायामेवैके पिण्डनिधानमुपदिशन्ती'ति। अपर आह—इत्युक्तमित्यनेनैव पिण्डनिपरणमपि प्राप्यते इतिशब्दस्याद्यर्थत्वात्। ब्राह्मणभोजनाद्युक्तमित्यर्थः। क्व पुनरुक्तं पार्वणश्राद्ध इति ॥ २१ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
द्वितीयाध्याये चतुर्थः खण्डः।

अथ पञ्चमः खण्डः।

**अपरेद्युरन्वष्टक्यम् ॥ १ ॥**

अपरस्मिन्नहनि नवम्यामन्वष्टक्यं नाम कर्म कर्तव्यम् ॥ १ ॥

**तस्यैव मांसस्य प्रकल्प्य ॥ २ ॥**

योऽसौ पशुरष्टकायामुपाकृतः तस्यैव मांसस्यैकदेशं प्रकल्प्य संस्कृत्य तत् कर्म कर्तव्यम्। ब्राह्मणभोजनार्थ एवात्र मांससंस्कारः होमेऽभावात्। पूर्वेद्युस्तु होमे ब्राह्मणभोजने च मांसं भवति ॥ २ ॥

**दक्षिणाप्रवणेऽग्निमुपसमाधाय परिश्रित्योत्तरतः परिश्रितस्य द्वारं कृत्वा समूलं बर्हिस्त्रिरपसलैरवधून्वन् परिस्तीर्य हवींष्यासादयेदोदनं कृसरं पायसं दधिमन्थान् मधुमन्थांश्च ॥ ३ ॥**

दक्षिणदिग्भागेऽवनतं दक्षिणाप्रवणम् उत्तरोन्नतं स्थण्डिलं तस्मिन्नग्निमुपसमाधाय तं प्रदेशं तिरस्करिण्यादिभिः

१. 'मा' ख. पाठः. २. 'प्रवणं द' ग. पाठः.

परिश्रित्य परिश्रितस्योत्तरपक्षे द्वारं करोति । परिश्रितस्येति वचनं यदा परिश्रितं तदोत्तरतो द्वारं करोतीत्येवमर्थम् । तेन कृताकृतं परिश्रयणम् । द्वारं कृत्वा मूलेन सहाहृतं बर्हिर्भिः परिस्तृणाति । अपसलैरपसव्यमित्यर्थः । अत्रधून्वन् अधस्तात् कम्पयन् परिस्तीर्य तस्मिन् परिस्तरणे हवींष्यासादयत्योदनादीनि । दधिमिश्राः सक्तवो दधिमन्थाः, मधुमिश्राः मधुमन्थाः । 'पिण्डपितृयज्ञकल्पेने'ति वक्ष्यमाणं सर्वत्रैवास्मिन् कर्मणि प्रवर्तते न होममात्रे । ततश्च ओदनादीनामप्यौपासन एव श्रपणं भवति ॥ ३ ॥

पिण्डपितृयज्ञकल्पेन ॥ ४ ॥

इदं कर्म कर्तव्यम् ॥ ४ ॥

हुत्वा मधुमन्थवर्जं पितृभ्यो दद्यात् ॥ ५ ॥

मधुमन्थमेकं वर्जयित्वान्यानि द्रव्याणि हुत्वा पितृभ्यो दद्यात् तान्येव द्रव्याणि सह मधुमन्थेन । अनेन पिण्डनिपरणमुक्तं भवति ॥ ५ ॥

स्त्रीभ्यश्च ॥ ६ ॥

तानि द्रव्याणि पिण्डरूपेण दद्यात् । काभ्यः, पितृसन्निधेस्तत्स्त्रीभ्यः मातृपितामहीप्रपितामहीभ्यः । द्वे लेखे भवतः । ऊहश्च[1] भवति यथा 'शुन्धन्तां मातरः शुन्धन्तां पितामह्यः शुन्धन्तां प्रपितामह्य' इति । तथा 'एतत् ते तत' 'ये च त्वामन्वि'त्यत्र द्वयोर्मात्रोर्द्विवद् भवति । बहुषु बहुवत् । एतद्वां यज्ञदारुददे याश्च युवामत्रानु, एतद्वो यज्ञदारुददाविष्णुदा

१. 'त्रे', १. 'भ्यः । ऊ' ग. पाठः. २. 'श्च । शु' ख. पाठः.

याश्च युष्मानत्रानु । अनुमन्त्रणं तु पितॄणां मातॄणां च सकृदेव । एकशेषवृत्त्या पितर इत्युभयत्र सम्भवात् । तथा अभ्यञ्जने यज्ञदारुद्रदे अभ्यञ्जाथाम् । यज्ञदारुद्रदाविष्णुदा अभ्यङ्ग्ध्वमिति । वासोदाने एतद्वो मातरो वासो मा नोऽतोऽन्यन्मातरो युङ्ग्ध्वम् । एवं पितामह्यः प्रपितामह्यो युङ्ग्ध्वमिति । उपस्थानं तु सकृदेव पूर्ववत् । एवमेतत् स्त्रीणां पिण्डदानं भवति ॥ ६ ॥

सुरामाचाममित्यधिकम् ॥ ७ ॥

स्त्रीपिण्डेषु सुरामाचामं चाधिकं दद्यात् । सुरा प्रसिद्धा । आचामः तण्डुलप्रक्षालनाम्बु यवागूरित्यन्ये ॥ ७ ॥

कर्षूष्वेके द्वयोः षट्सु वा ॥ ८ ॥

एके आचार्याः कर्षूनिर्वपणमिच्छन्ति । लेखयोर्लेखयोः कर्षूरित्यभिधानम् । कर्ष्वौ च कर्ष्वश्च कर्ष्वः । द्वयोः कर्ष्वोः षट्सु वा कर्षूषु । यदा द्वे तदा पितॄणामेका मातॄणामपरा । ते चायते भवतः । यदा षट् तदा तिस्रस्तिस्रश्च वृत्ता भवन्ति ॥ ८ ॥

पूर्वासु पितृभ्यो दद्यात् ॥ ९ ॥

पूर्वा च लेखा पूर्वा कर्षूः पूर्वाश्च लेखाः पूर्वाश्च कर्ष्वः । तासु पितृभ्यः पिण्डं दद्यात् ॥ ९ ॥

---

१. 'ति एवमञ्जने अञ्जाथामङ्ग्ध्वमिति । वा' घ. पाठः २. 'च' ग. ख. पाठः. ३. 'त्यपटाभि', ४. 'पूर्वासु' ख. पाठः.

एतेन—

**अपरासु स्त्रीभ्यः ॥ १० ॥**

इति व्याख्यातम् ॥ १० ॥

**एतेन माघ्यावर्षं प्रौष्ठपद्या अपरपक्षे ॥ ११ ॥**

एतेनानन्तरोक्तेनान्वष्टक्येन माघ्यावर्षं नाम कर्म व्याख्यातम् । तच्च प्रौष्ठपद्याः पौर्णमास्याः परो योऽपरपक्षः तत्र भवति । मघासु वर्षासंयोगान्माघ्यावर्षमिति भवति । तच्च त्रयोदश्याम् । तथा याज्ञवल्क्यः—

"यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।

तथा वर्षात्रयोदश्यां मघासु च न संशयः ॥"

इति । वर्षर्तौ या त्रयोदशी मघाभिः सह संबध्यते तस्यामित्यर्थः । अपरे सामान्याभिधानात् सर्वस्मिन्नेवापरपक्षे माघ्यावर्षमिच्छन्ति ॥ ११ ॥

**मासि मासि चैवम् ॥ १२ ॥**

यथेदं माघ्यावर्षं प्रौष्ठपद्या अपरपक्षे भवति, एवं मासि मास्यपरपक्षे भवति । मासि मास्यमावास्यायां पार्वणश्राद्धं वक्ष्यति, तेन सहेदं विकल्प्यते एकार्थत्वाद् । यद्यप्येवं तथापि प्रौष्ठपद्या अपरपक्षे माघ्यावर्षमेव नियतम्, अन्यथा पूर्वो योगोऽपार्थकः स्यात् ॥ १२ ॥

**पितृभ्योऽयुक्षु प्रतिष्ठापयेत् ॥ १३ ॥**

पितृभ्यो यद् दीयते गन्धमाल्यादि तत्सर्वमयुक्संख्यायां प्रतिष्ठापयेत् सकृत् त्रिः पञ्चकृत्व इति दद्यात् ॥ १३ ॥

१. 'र्मे कर्तव्यमाख्या', २. 'धर्ममा' ख. पाठ ३. 'कृत्वा' ग. घ. पाठः.

नवावरान् भोजयेत् ॥ १४ ॥

अन्वष्टक्यविषयमिति केचित् । सर्वत्राष्टकायामित्यन्ये । अष्टकायां नवावरा ब्राह्मणा भोजयितव्याः । पूर्वं विश्वेभ्यो देवेभ्य एकैकमेकैकस्येत्येवमादिकमत्रे न भवति तस्य पार्वणादिविषयत्वात्[१] अतत्प्रकृतित्वाच्चाष्टकायाः । पिण्डपितृयज्ञो[२]ऽष्टकायाः प्रकृतिः । स्वधाग्रहणादिकमपि नास्ति । केवलं नवावरा भोजयितव्या इति केचित्[३] । अन्ये तु सर्वमनुतिष्ठन्ति ॥ १४ ॥

अयुजो वा ॥ १५ ॥

भोजयेदित्येव । पञ्च सप्तेति शक्त्यपेक्षो विकल्पः । बहुवचननिर्देशादेकस्याप्रसङ्गः ॥ १५ ॥

युग्मान् वृद्धिपूर्तेषु ॥ १६ ॥

आभ्युदयिकेषु श्राद्धेषु युग्मान् भोजयेत् । पार्वणेन सहाभ्युदयश्राद्धं वक्ष्यते । तत्र युग्मनियमार्थमिदम् । तेनैकैकमेकैकस्येत्यादिकल्पान्तरमाभ्युदयिकेषु न भवति । केषु पुनः कर्मस्वभ्युदयश्राद्धं भवति । येष्वपरेद्युर्देवेज्या भवति, 'तस्मात्पूर्वेद्युः पितृभ्यः क्रियते उत्तरमहर्देवान् यजन्त' इत्येतच्छ्रुतिमूलत्वात् ॥ १६ ॥

अयुग्मानितरेषु ॥ १७॥

उक्तेभ्यो येऽन्ये तेष्वयुग्मान् भोजयेत् । एकोद्दिष्टविषयमित्येतदुपदेशः । तेन तत्र द्वौ द्वाविति वक्ष्यमाणः कल्पो न भवति ॥ १७ ॥

---

१. 'कस्ये', २. 'त्र म' ग. पाठः., ३. 'त् त' ग. घ. पाठः. ४. 'प्य' ख. पाठः.

**प्रदक्षिणमुपचारः ॥ १८ ॥**

वृद्धिपूर्तेष्विति संबध्यते । तत्र प्रदक्षिणमुपचारः स्यात् । उपचारक्रिया अन्यत्राप्रदक्षिणम् । परिस्तरणाद्युदाहरणम् ॥ १८ ॥

**यवैस्तिलार्थः ॥ १९ ॥**

यच्छ्राद्धेषु तिलकृत्यं, तदाभ्युदयिकेषु यवैः कर्तव्यम् । आपस्तम्बश्च— 'अवकाशेषु तिलान् विकिरति पिण्डांश्च तिलमिश्रान् निपृणाति । मासि श्राद्धे तिलाना द्रोण द्रोणं येनोपायेन शक्नुयात् तेनोपयोजयेत्' इति । तत्र सर्वत्र यवा भवन्ति । स्वधाग्रहणे च तिलोऽसि सोमदेवत्य इत्यत्र यवोऽसि सोमदेवत्य इत्यूहेन यवप्रक्षेपः ॥ १९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
द्वितीयाध्याये पञ्चम खण्ड ।

---

अथ षष्ठः खण्डः ।

**रथमारोक्ष्यन्नाना पाणिभ्यां चक्रे अभिमृशेदहं ते पूर्वं पादावारभे[1] बृहद्रथन्तरे ते चक्रे ॥ १ ॥**

मन्त्रेतिशब्दोऽध्याहार्यः[2] । नवरथे विशेषं वक्ष्यति । तद्व्यतिरिक्तं क्रीतं लब्धं पूर्वकृतं वा रथमारोक्ष्यन् आरोढुमिच्छन् पाणिभ्यां चक्रे नाना पृथगभिमृशेद् अहं ते इति मन्त्रेण । नानेत्युभाभ्या[3] पाणिभ्यामेकस्याभिमर्शनं मा भूद् युगपदभिमर्शनं यथा स्यादित्येतमर्थं नानाभूताभ्यां पाणिभ्यामभि-

1. 'भे वृ' ख ग. ङ पाठ 2 'इतिशब्दाध्याहारेण मन्त्रसमाप्ति ।', 3. 'नानाग्रहणमुभा' ग. घ पाठ.

मृशेत् न संहताभ्यामिति । रथमारुह्य यावद्दूरं गच्छति तावत् सकृदेवेदं कर्म भवति, तदर्थत्वादारोहणस्य । मध्ये त्वारोहणमानुपङ्क्तिकम् ॥ १ ॥

**वामदेव्यमक्ष इत्यक्षाधिष्ठाने ॥ २ ॥**

नाभौ वामदेव्यमक्ष इत्यभिमृशेन्नाना पाणिभ्याम् ॥

**दक्षिणपूर्वाभ्यामारोहेद् वायोष्ट्वा वीर्येणारोहामीन्द्रस्यौजसाधिपत्येनेति ॥ ३ ॥**

दक्षिणः पूर्वः ययोस्ताभ्यां दक्षिणपूर्वाभ्याम् । पादाभ्यामित्यनुक्तमपि गम्यते तत्कर्मत्वादारोहणस्य । एवंभूताभ्यां पादाभ्यामारोहेद् रथं वायोष्ट्वेति मन्त्रेण ॥ ३ ॥

**रश्मीन् संमृशेदरश्मिकान् वा दण्डेन ब्रह्मणो वस्तेजसा संगृह्णामि सत्येन वस्तेजसा संगृह्णामीति ॥ ४ ॥**

रश्मयोऽश्वादीनां प्रग्रहाः तान् संमृशेद् ब्रह्मणो व इति मन्त्रेण । ये पुनररश्मयोऽश्वादयः तान् दण्डेन संमृशेद् वा तेनैव मन्त्रेण । बहुवचननिर्देशाद् बहुयुगो रथोऽभिप्रेतः । यद्यपि तस्य चक्राणि चत्वारि, तथापि चक्रे इति द्विवचनयोगान्मुख्ययोरेवाभिमर्शनम् ॥ ४ ॥

**अभिप्रवर्तमानेषु जपेत् सहस्रसनिं वाजमभिवर्तस्व रथ देव प्रवह वनस्पते वीड्वङ्गो हि भूया इति ॥ ५ ॥**

यदा चोदिता अश्वादय इष्टां दिशमभिवर्तन्ते गच्छन्ति तदा सहस्रसनिमित्येतं मन्त्रं प्रवहान्तं जपेत्, वनस्पते

१. 'ययोऽत्र र' ग. पाठ.

वीड्वङ्गो हि भूया इत्येतामृचं च ॥ ५ ॥

एतयान्यान्यपि वानस्पत्यानि ॥ ६ ॥

रथसंनिधानादन्यान्यपि तज्जातीयानि वानस्पत्यानि शकटादीन्येतयाभिमृशेत् ॥ ६ ॥

स्थिरौ गावौ भवतां वीळु रक्ष इति रथाङ्गमाभिमृशेत् ॥ ७ ॥

स्थिरौ गावावित्येतस्यामृचि यद्यद् रथाङ्गं दृष्टं तत्तदभिमृशेत् तेन तेन ऋगंशेन[2] ॥ ७ ॥

सुत्रामाणं पृथिवीं द्यामनेहसमिति नावम् ॥ ८ ॥

आरोहेदिति व्यवहितमपि संबध्यते मन्त्रलिङ्गात्, नाभिमृशेत् । नाव आरोहणे प्राप्तेऽनयर्चारोहेत् ॥ ८ ॥

नवरथेन यशस्विनं वृक्षं ह्रदं वाविदासिनं प्रदक्षिणं कृत्वा फलवतीः शाखा आहरेत् ॥ ९ ॥

नवरथे त्वयं विशेषः। पूर्ववदारुह्य तेन यशस्विनं प्रसिद्धं वृक्षं ह्रदं वाविदासिनमशोष्यं प्रदक्षिणं कृत्वा फलवतीः शाखा आहरेत् ॥ ९ ॥

अन्यद्वा कौटुम्बम् ॥ १० ॥

कौटुम्बं कुटुम्बस्योपकारकमन्यद् द्रव्यं वाहरेत् इति रथारोहणम् ॥ १० ॥

---

१ 'द् ते' ख पाठ　२. 'ते' ग पाठः.　३. 'तत्प्रधानत्वाद्वा' घ. पाठः.

**संसदमुपयायात् ॥ ११ ॥**

संसदिति व्यवहारस्थानमुच्यते । ताम् उपयायाद्यदि व्यवहारार्थी स्यात् । वक्ष्यमाणविवक्षया प्राप्तानुवादोऽयम् ॥

**अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वावरोहेत् ॥ १२ ॥**

संसदं प्रपद्येतेत्यर्थः । अवपूर्वो रुहिरस्मिन्नर्थेऽन्यत्रापि दृष्टः । तद् यथा — "प्रदासुगः पितुर्मां यदस्तु पन्था इति पन्थानमवरुह्ये"ति ॥ १२ ॥

**ऋषभं मा समानानामित्यभिक्रामन् ॥ १३ ॥**

यदा प्रत्यर्थिनमभिक्रामति, तदा ऋषभं मेति जपेत् जपित्वेति प्रकृतत्वात् ॥ १३ ॥

**वयमद्येन्द्रस्य प्रेष्ठा इत्यस्तं यात्यादित्ये[2] ॥ १४ ॥**

आदित्ये अस्तं याति सति गच्छति सति वयमद्येन्द्रस्येत्येतामृचं जपेत् ॥ १४ ॥

**तद्वो दिवो दुहितरो विभातीरिति व्युष्टायाम् ॥ १५ ॥**

व्युष्टायां रात्रौ उषाकाले तद्वो दिव इति जपेत् । आ व्यवहारसमाप्तेरेते जपाः प्रत्यहं भवन्ति ॥ १५ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ द्वितीयाध्याये षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

**अथातो वास्तुपरीक्षा ॥ १ ॥**

अथशब्दोऽधिकारार्थः । अतःशब्दो हेत्वर्थः । यस्मात्

---

१. 'न् एतल्लभ्यते ॥' घ पाठः. २. 'त्ये ॥ ज' ख. ग. पाठः.

तत्र तत्र निमित्ते समृद्धिव्यृद्धी भवतः, अतो वास्तुपरीक्षा वर्तिष्यते । वास्त्विति गृहमुच्यते । तस्योत्तरत्र लक्षणानि वक्ष्यन्ते । सैव परीक्षा ॥ १ ॥

**अनूपरमविवदिष्णुभूम ॥ २ ॥**

ऊषा यत्र सन्ति तदूषरं ततोऽन्यदनूषरम् । विवदनशीलं विवदिष्णु ततोऽन्यदविवदिष्णु । भूमशब्दो भूमिपर्यायः । 'यवं न वृष्टिर्व्युनत्ति भूम' 'वृतेव श्मश्रु वपसि प्रभूमे'ति वत् । अविवदिष्णु भूम यत्र तदविवदिष्णुभूम । तद्वास्तु सर्वसमृद्धमिति वक्ष्यमाणेन संबन्धः ॥ २ ॥

**ओषधिवनस्पतिवत् ॥ ३ ॥**

ओषधयश्च वनस्पतयश्च यत्र भवन्ति तदोषधिवनस्पतिवत् । 'छन्दसीर' इति वत्वं 'छन्दोवत् सूत्राणि भवन्ती'ति ॥ ३ ॥

**यस्मिन् कुशवीरणं प्रभूतम् ॥ ४ ॥**

कुशाश्च वीरणाश्च कुशवीरणम् । तृणद्वन्द्वत्वादेकवद्भावः । वीरणा अपि तृणविशेषाः, शरासः कुशरास इति मन्त्रे दर्शनात् । तद् यस्मिन् देशे प्रभूतं तद्वास्तु समृद्धम् ॥ ४ ॥

**कण्टकिक्षीरिणस्तु समूलान् परिखायोद्वासयेत् ॥**

कण्टकिनः खदिरादयः क्षीरिण उदुम्बरादयः तान् समूलान् मूलैः सहितान् परिखायोत्पाट्योद्वासयेत् । कण्टकिक्षीरिण इति नायं कर्मधारयः पृथङ्मत्वर्थीयनिर्देशात् । अन्यथा द्वन्द्वादेव मत्वर्थीययोगः कृतः स्यात् ॥ ५ ॥

---

१. 'णम् । द्वन्द्व' क. ग. पाठः.

**अपामार्गः शाकस्तिल्वकः परिव्याध इति चैतानि ॥ ६ ॥**

अपामार्गो वीरुद्विशेषः । शाकादयो वृक्षविशेषाः । अपामार्गादीनां पुंलिङ्गत्वाद् एतानिति वक्तव्ये नपुंसकनिर्देशाद् गम्यते अन्यान्यप्येवंजातीयकानि समूलानि परिखायोद्वासयेदिति ॥ ६ ॥

**यत्र सर्वत्रापो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्यः स्यन्देरन्नप्रपतत्यः ॥ ७ ॥**

यस्मिन् देशे आपो मध्यं समायन्ति समागच्छन्ति समेत्य च शयनीयदेशं प्रदक्षिणं परियन्ति परीत्य च प्राच्यः स्यन्देरन् प्राङ्मुखा गच्छेयुः अप्रपतत्यः नुमभावश्छान्दसः । एतदुक्तं भवति मध्यतो निम्नं प्राक्प्रवणं शयनस्थानं प्राच्यां दिशि गृहिण इति ॥ ७ ॥

**तत् सर्वसमृद्धम् ॥ ८ ॥**

तदेतदुक्तलक्षणं वास्तु सर्वसमृद्धं भवति ॥ ८ ॥

**समवस्रवे भक्तशरणं कारयेत् ॥ ९ ॥**

येन पथा आपः समवस्रवन्ति तस्मिन् समवस्रवे । प्राच्यां दिशीत्युक्तं भवति । तत्र भक्तशरणं महानसं कारयेत् ॥

**बह्वन्नं ह भवति ॥ १० ॥**

एवं कृतं भक्तगृहं बह्वन्नं भवति । हशब्दोऽभिमतत्वद्योतनार्थः ॥ १० ॥

**दक्षिणाप्रवणे सभां मापयेत् साधृता ह भवति ॥**

दक्षिणाप्रवणे देशे सभा मापयितव्या । सभेत्यास्थान-

मुच्यते। एवं कृता सा सभा अद्यूता भवति। हशब्दः प्रशंसायाम् ॥ ११ ॥

एवं परमतेन प्रशस्य स्वमतेन निन्दति—

**युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति ॥ १२ ॥**

कितवा द्यूतपराः अद्यूता ह भवतीत्युक्तत्वात्। प्रमायुका मर्तारः ॥ १२ ॥

**यत्र सर्वत आपः प्रस्यन्देरन् सा स्वस्त्ययन्यद्यूता च ॥ १३ ॥**

एवंविधे देशे कृता सभा स्वस्तिप्राप्तिनिमित्तभूता अद्यूता च भवति ॥ १३ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
द्वितीयाध्याये सप्तमः खण्डः।

---

अथाष्टमः खण्डः।

**अथैतैर्वास्तु परीक्षेत ॥ १ ॥**

अथ एतैर्वक्ष्यमाणलक्षणैर्वास्तु परीक्षेत। पृथगधिकारः प्राधान्यख्यापनार्थः। तेनैतत्संभवे नान्यदादर्तव्यम् ॥

**जानुमात्रं कर्तं खात्वा तैरेव पांसुभिः प्रतिपूरयेत् ॥ २ ॥**

जानुप्रमाणं कर्तमवटं खात्वा ये उद्धृताः पांसवस्तैरेव प्रतिपूरयेत् कर्तम् ॥ २ ॥

ततः किं—

**अधिके प्रशस्तम् ॥ ३ ॥**

कर्तपूरणादधिके तस्मिन् पांसुराशौ प्रशस्तं भद्रं भवति ॥ ३ ॥

**समे वार्तम् ॥ ४ ॥**

यदा पांसुराशिरवटेन समो भवति न न्यूनो नातिरिक्तः तदा वार्तं निर्दोषं भवति नानर्थावहं न चाभ्युदयावहम् ॥ ४ ॥

**न्यूने गर्हितम्[1] ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

अथान्या परीक्षा—

**अस्तमितेऽपां पूर्णं परिवासयेत् ॥ ६ ॥**

जानुमात्रं कर्तं खात्वेति वर्तते । अस्तमित आदित्ये तमद्भिः पूरयेत् । तमपां पूर्णं परिवासयेद् ओदयात् ॥ ६ ॥

ततः किं—

**सोदके प्रशस्तमार्द्रे वार्तं शुष्के गर्हितम् ॥ ७ ॥**

सोदकं किञ्चिच्छिष्टोदकम् । अन्यत् स्पष्टम् ॥ ७ ॥

**श्वेतं मधुरास्वादं सिकतोत्करं ब्राह्मणस्य ॥ ८ ॥**

मधुरास्वादं मधुररसम् । सिकतोत्करं सिकताबहुलम् । एवंभूतं वास्तु ब्राह्मणस्य शुभम् ॥ ८ ॥

**लोहितं क्षत्रियस्य ॥ ९ ॥**

मधुरास्वादं सिकतोत्करमिति वर्तते ॥ ९ ॥

---

१. 'म् न्यूने पांसुराशौ गर्हितं भवति । अ' प. पाठः

पीतं वैश्यस्य ॥ १० ॥

पूर्ववदनुवृत्तिः ॥ १० ॥

तत् सहस्रसीतं कृत्वा यथादिक् समचतुरश्रं मापयेत् ॥ ११ ॥

तद्वास्तु सहस्रसीतं सहस्रहलकृष्टं कृत्वा। सहस्रशब्दो बह्वर्थः। यथादिक् यस्यां दिशि यस्य स्थानमुक्तं तदनुरूपम्। समचतुरश्रं सर्वासु दिक्षु समं मापयेत् ॥ ११ ॥

आयतचतुरश्रं वा ॥ १२ ॥

दीर्घचतुरश्रं वा मापयेद् वास्तु। अनेन वृत्तत्रिकोणादेः प्रतिषेधः ॥ १२ ॥

तच्छमीशाखयोदुम्बरशाखया च शन्तातीयेन त्रिः प्रदक्षिणं व्रजन् प्रोक्षति ॥ १३ ॥

तद्वास्तु शन्तातीयेन सूक्तेन। 'मतौ छः सूक्तसाम्नोरि'[1]त्येवं चेच्छप्रत्ययः, 'ईळे द्यावापृथिवी' 'इदं ह नूनमेषाम्' 'उत देवा अवहितमि'त्येतेषामन्यतमस्य ग्रहणं प्राप्नोति तेषु शन्तातिशब्दस्य सत्त्वात्। 'याभिः शन्तातिः सा शन्तातिमयस्करत्। आत्वागमं शन्तातिरति शं न इन्द्राग्नी' इत्यस्य तु ग्रहणमित्युपदेशः। शब्दनिर्वाहस्तु यथाकथञ्चिदन्वेष्टव्यः। शं करोतीति शन्तातिः 'शिवशमरिष्टस्य करे' इति तातिल्प्रत्ययः। (शन्तातिग्रहणं?) तस्मै हितं शन्तातीयमिति।

१. 'रेव चोदयन् प्र' ख, 'रेव चोदयेच्छ' ग. पाठः.

प्रतिप्रदक्षिणं सूक्तस्यावृत्तिः। प्रोक्षणं तु प्रत्यृचं प्रत्यर्धर्चं प्रतिपादं वा ॥ १३ ॥

**अविच्छिन्नया चोदकधारयापो हि ष्ठा मयोभुव इति तृचेन ॥ १४ ॥**

त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षतीत्येव ॥ १४ ॥

**वंशान्तरेषु शरणानि कारयेत् ॥ १५ ॥**

एकस्मिन् वंशप्रदेशे यथा शरणानि शयनस्थानानि भवन्ति तथा कारयेत्। एकस्मिन् शयने वंशप्रभेदो न कर्तव्यः ॥ १५ ॥

**कर्तेष्ववकाः शीपालमित्यवधापयेत् ॥ १६ ॥**

कर्तेष्वित्यनुवादात् स्थूणाकर्ताः खानयितव्या इति गम्यते। 'प्रदक्षिणं स्थूणाकर्तान् खानयित्वे'त्यापस्तम्बः। तेषु। जले प्लवमाना मूलवन्तः पिण्डीभूता अभूमिस्पर्शिनः शैवालविशेषा अवकाः। शीपालं शैवलम्। तदुभयं निधापयेत् ॥ १६ ॥

तयोः प्रभावा—

**न हास्य दाहुकं भवतीति विज्ञायते ॥ १७ ॥**

अस्यैवं कुर्वतो गृहं न दाहुकं भवति। कर्मण्युकञ्प्रत्ययः। कदाचिदपि दह्यमानं न भवतीति विज्ञायते। अग्न्यादिकं वा दाहुकं न भवतीति ॥ १७॥

---

१. 'त्वात घ. पाठः.

मध्यमस्थूणायाः कर्तेऽवधाय प्रागग्रोदगग्रान् कुशानास्तीर्य व्रीहियवमतीरप आसेचयेद् अच्युताय भौमाय स्वाहेति ॥ १८ ॥

या गृहे मध्यमस्थूणा प्रधानभूता तस्याः कर्तेऽवधाय, किं, प्रागुक्ता अवकाः शीपालं च। किमर्थं तर्हि वचनं, ननु तेनैव सिद्धम्। वक्ष्यमाणो विशेषविधिस्तस्य बाधको मा भूदिति। यत्रावधानास्तरणे तत्राप आसेचयेद् अच्युताय भौमाय स्वाहेति मन्त्रेण ॥ १८ ॥

अथैनामुच्छ्रीयमाणामनुमन्त्रयेतेहैव तिष्ठ निमिता तिल्वलास्त्वामिरावतीं मध्ये पोषस्य तिष्ठतीम् आ त्वा प्रापन्नघायवः आ त्वा कुमारस्तरुण आ वत्सो जायतां सह आ त्वा परिश्रितः कुम्भ आ दध्नः कलशैरय इति ॥ १९ ॥

अथानन्तरमेनां मध्यमस्थूणामुच्छ्रीयमाणां कर्ते स्थाप्यमानामनुमन्त्रयेत इहैव तिष्ठेति द्वाभ्यामृग्भ्याम ॥ १९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
द्वितीयाध्याये अष्टमः खण्डः।

---

अथ नवमः खण्डः।

वंशमाधीयमानमृतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरं दधाना इति ॥ १ ॥

स्थूणायामाधीयमानं वंशमनुमन्त्रयते ऋतेनेति मन्त्रेण ॥ १ ॥

**सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत् पृथिव्या अधिसम्भवेति ॥ २ ॥**

सदूर्वासु दूर्वासहितासु चतसृषु शिलासु मणिकं प्रतिष्ठापयति पृथिव्या अधिसम्भवेत्यनेन ॥ २ ॥

**अरङ्गरो वावदीतीति वा ॥ ३ ॥**

अथवा अरङ्गरो वावदीतीत्यनेन प्रतिष्ठापयति । मन्त्रयोर्विकल्पः ॥ ३ ॥

**अथास्मिन्नप आसेचयत्यैतु राजा वरुणो रेवतीभिरस्मिन् स्थाने तिष्ठतु मोदमानः। इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्त्विति ॥ ४ ॥**

अथानन्तरमस्मिन्मणिकेऽप आसेचयति ऐतु राजेति मन्त्रेण ॥ ४ ॥

**अथैनच्छमयति व्रीहियवमतीभिरद्भिः ॥ ५ ॥**

अथानन्तरमेनद् वास्तु शमयति शान्तं करोति व्रीहियवयुक्ताभिरद्भिः ॥ ५ ॥

तत्र प्रकार —

**हिरण्यमवधाय शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षत्यविच्छिन्नया चोदकधारयापो हि ष्ठा मयोभुव इति तृचेन ॥ ६ ॥**

तास्वप्सु हिरण्यमवधाय। शन्तातीयेनेत्यादि गतम्॥

**मध्येऽगारस्य स्थालीपाकं श्रपयित्वा वास्तोष्पते प्रतिजानीह्यस्मानिति चतसृभिः प्रत्यृचं हुत्वा**

---

१. 'स्था शि' ख. पाठ.

ब्राह्मणान् भोजयित्वा शिवं वास्तु शिवं वास्त्विति वाचयीत ॥ ७ ॥

स्थालीपाकधर्मत्वादेव श्रपणे सिद्धे श्रपयित्वेति वचनं नियमार्थं स्थालीपाकस्यास्यैव प्रथमं श्रपणं यथा स्याद् भोजनार्थं मा भूदिति । तैर्भुक्तवद्भिरेव वाचनम् ॥ ७ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
द्वितीयाध्याये नवमः खण्डः ।

---

अथ दशमः खण्डः ।

उक्तं गृहप्रपदनम् ॥ १ ॥

यदनन्तरोक्तं मणिकप्रतिष्ठापनादि तद् गृहप्रपदनं स्वगृहप्रवेशः । पूर्वं कृतसंस्कारमपि गृहं क्रयादिप्राप्तं प्रविशताप्येतत् कर्तव्यमित्युक्तं भवति ॥ १ ॥

बीजवतो गृहान् प्रपद्येत ॥ २ ॥

पूर्वं व्रीह्यादिबीजानि स्थापयित्वा पश्चाद् गृहान् प्रपद्येत ॥ २ ॥

क्षेत्रं प्रकर्षयेदुत्तरैः प्रोष्ठपदैः फल्गुनीभी रोहिण्या वा॥

सर्वत्र 'नक्षत्रे च लुपी'त्यधिकरणे तृतीया । एषु नक्षत्रेषु क्षेत्रस्य कर्षणं कारयेत् ॥ ३ ॥

तत्र प्रकार' —

क्षेत्रस्यानुवातं क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाज्जपेद् वा ॥ ४ ॥

क्षेत्रस्यानुवातं यस्यां दिशि होमे कृते क्षेत्रं धूमो

व्याप्नोति तस्यां दिग्होमः कर्तव्यः । जपेद्वा जपहोमयोर्विकल्पः ॥ ४ ॥

**गाः प्रतिष्ठमाना अनुमन्त्रयेत मयोभूर्वातो अभि वातूस्रा इति द्वाभ्याम् ॥ ५ ॥**

आत्मीया गावो यदा प्रतिष्ठन्ते गृहाग्निर्गच्छन्ति तदा ता अनुमन्त्रयते मयोभूरिति द्वाभ्यामृग्भ्याम् ॥ ५ ॥

**आयतीर्यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः ॥ ६ ॥**

इतिकरणाध्याहारेण मन्त्रसमाप्तिः । आयतीर्गृहान् प्रत्यागच्छतीरनुमन्त्रयते यासामूध इति मन्त्रेण ॥ ६ ॥

**या देवेषु तन्वा मैरयन्तेति च सूक्तशेषम् ॥ ७ ॥**

द्वितीयानिर्देशाद् ब्रूयादिति गम्यते । या देवेष्विति (यत्? यः) सूक्तशे(षं?षः) तमप्यायतीनामनुमन्त्रणे ब्रूयात् ॥

**आगावीयमेके ॥ ८ ॥**

एक आचार्या आ गावो अग्मन् इति सूक्तमिच्छन्ति ॥

**गणानासामुपतिष्ठेतागुरुगवीनां भूताः स्थ प्रशस्ताः स्थ शोभनाः प्रियाः प्रियो भूयासं शं मयि जानीध्वं शं मयि जानीध्वम् ॥ ९ ॥**

आसां गवां गणान् संघातान् यत्र यत्र दृष्टानुपतिष्ठेत। किमविशेषेण, नेत्याह — अगुरुगवीनां गुर्वेर्या गावः तद्व्यतिरिक्तानाम् आसां गवां गणानुपतिष्ठेत भूताः स्थेति मन्त्रेण।

१. 'या वो मू' ग. पाठः. २. 'ण द्विरु' ग. पाठ..

शं मयि जानीध्वमिति सकृदुक्त्या मन्त्रान्तद्विरुक्तिरध्यायपरिसमाप्तिकृता । इतिकरणं चाध्याहार्यम् ॥ ९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
अनाविलायां द्वितीयाध्याये दशमः खण्डः ।
द्वितीयोऽध्यायः समाप्तः ।

---

१. 'ता द्वि' घ. पाठः.

## अथ तृतीयोऽध्यायः।

**अथातः पञ्चयज्ञाः ॥ १॥**

अथशब्दोऽधिकारार्थः। अतःशब्दो हेत्वर्थः। यस्मादेतैर्विना न निःश्रेयसाभ्युदयसिद्धिः अतः पञ्चयज्ञा वक्ष्यन्ते। पञ्चयज्ञा इति संज्ञाशब्दोऽयमन्वर्थः। 'दिक्संख्ये संज्ञायाम्' इति समासः ॥ १॥

तानुपदिशति —

**देवयज्ञो ब्रह्मयज्ञो भूतयज्ञः पितृयज्ञो मनुष्ययज्ञ इति ॥**

उद्देशक्रमेण लक्षणान्याह—

**तद्यदग्नौ जुहोति स देवयज्ञो यत्स्वाध्यायमधीते स ब्रह्मयज्ञो यद् बलिं करोति स भूतयज्ञो यत् पितृभ्यो ददाति स पितृयज्ञो यन्मनुष्येभ्यः स मनुष्ययज्ञः ॥ ३॥**

तदिति वाक्योपन्यासे। यच्छब्दोपबन्धाद् वर्तमानापदेशाच्चानुवादा एते। अनुवादाश्च प्राप्तिमपेक्षन्ते। तत्र स्वाध्यायाध्ययनमनन्तरं वक्ष्यते। एवं मनुष्येभ्यो दानं 'गृहानेत्य यद् ददाति सा दक्षिणे'ति। देवेभ्यो होमो वैश्वदेवे। भूतेभ्यो बलिहरणे। पितृभ्यो दानमपि तत्रैव 'स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेदि'ति ॥ ३ ॥

तेषामहरहः क्रिया चोद्यते —

**तानेतान् यज्ञानहरहः कुर्वीत ॥ ४ ॥**

सैषा न चोदनीया तेन तेन प्रापकेण प्राप्तत्वात्। अत्राहुः 'द्वादशरात्रं वा महागुरुषु दानाध्ययने वर्जयेर-

---

१. 'प्रकारेण' ख. ग. ङ. पाठ'.

न्नि'[1]ति वक्ष्यति। तमपि प्रतिषेधं बाधित्वाहरहःक्रियौ स्यादि-त्येवमर्थमिदमिति। ब्रह्मयज्ञस्तु न भवति 'तस्य द्वावनध्यायौ यदात्माशुचिर्यद्देश' इत्याहत्य वक्ष्यमाणत्वादिति॥ ४ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
द्वितीयाध्याये प्रथमः खण्डः।

---

अथ द्वितीयः खण्डः ।

**अथ स्वाध्यायविधिः ॥ १ ॥**

ब्रह्मयज्ञाध्ययनप्रकारौ वक्ष्येते। अक्रियमाणे विधिग्रहणे पूर्वोक्तानां यज्ञानामनन्तरं स्वाध्यायोऽध्येतव्य इत्युक्तं स्यात्। विधिग्रहणादनुष्ठानक्रमो यथारुचि भवति ॥ १ ॥

**प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ विज्ञायतेऽपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद् ब्रह्म करोति द्यावापृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत तथायुक्तोऽधीयीत स्वाध्यायम् ॥ २ ॥**

---

१. 'ति प्रतिषेध व' ग. घ. पाठ. २. 'या कर्तव्यतार्था' ग. पाठः.
३. 'णात् त्वनुष्ठाने य' ख. ग. घ. पाठ.

प्राङ्मुख उदङ्मुखो वा ग्रामान्निष्क्रम्याप आप्लुत्य आप्लवनं स्नानम् इह तु द्वितीयानिर्देशादवगाहनपूर्वके वर्तते। आप्लुत्येत्येव सिद्धेऽप इति वचनादुद्धृताभिरद्भिः स्नानप्रतिषेधः। आपस्तम्बस्तु गृहस्थं प्रकृत्याह—'सशिरावमज्जनमप्सु वर्जयेदि'ति। आप्लुत्य यज्ञोपवीती भूत्वाचामति। अत्र यज्ञोपवीतवचनादकर्मकाले नावश्यम्भावः। कर्माङ्गमिदमाचमनं शौचार्थस्य स्मृतिप्राप्तत्वाद्। आचम्याक्लिन्नवासा अनार्द्रवासा भूत्वा प्राक्कूलानां प्रागग्राणां दर्भाणां महदासनमुपस्तीर्य तेषु प्राङ्मुख उपविशति। अत्र प्राङ्मुखत्वविधानात्पूर्वत्रानियमः। उपविश्य उपस्थं कृत्वा उपस्थकरणे दक्षिणः पाद उत्तरः स्यात्। ततः पूर्वोक्तलक्षणपवित्रवन्तौ पाणी सन्दधाति। तत्र पवित्रवन्तौ पाणी इति वचनात् प्रतिपाणि पवित्रे भवतः। सन्धाय द्यावापृथिव्योः सन्धिमीक्षमाण इत्यन्वयः। मध्ये त्वासनार्थानां पवित्रार्थानां च दर्भाणामर्थवादो ब्राह्मणानुकर्षणेन। दर्भा इति यद् एष अपामोषधीनां च रसः तेन दर्भवान् कर्म कुर्वन् सरसं ब्रह्म करोतीति विज्ञायते ब्राह्मणं भवतीति। संमील्य वा चक्षुषी प्रकारान्तरेणापि यथा वा युक्तं समाहितमात्मानं मन्यते तथा युक्तोऽधीयीत स्वा-

१. 'सहशिरोव' ख. ग. ङ. पाठः. २. 'रः सव्यस्योपरि भवति। त' घ. पाठः. ३. 'तत. मच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशाविसुक्तलक्षणाभ्यां पवित्राभ्यां तद्वन्तौ पाणी सन्दधाति दक्षिणस्यावाचीनतावधान इति श्रुतेः। तत्र पवित्रवन्तौ पाणी सन्धायेति वच', ४. 'सः तत् तेन दर्भानुप्रवेशनेन स', ५. 'तिद्यावापृथिव्योः सन्धिमीक्षमाणः स' घ. पाठः.

ध्यायम्। स्वाध्यायविधिरित्युपक्रम्यापि पुनः स्वाध्यायग्रहणमोङ्कारव्याहृतिसावित्रीणामपि स्वाध्यायेऽनुप्रवेशार्थम्॥ २॥

**ओंपूर्वा व्याहृतयः॥ ३॥**

प्रथमं तावदोङ्कारपूर्विका व्याहृतयो वक्तव्याः॥ ३॥

**सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति तृतीयम्॥ ४॥**

पश्चात् सवित्रीमन्वाह, कथं, प्रथमं पच्छः द्वितीयमर्धर्चशः तृतीयं सर्वामिति। तृतीयग्रहणं पच्छो वार्धर्चशो वा सर्वा वेति विकल्पसंशयनिवृत्त्यर्थम्॥ ४॥

**अथ स्वाध्यायमधीयीत॥ ५॥**

पुनः स्वाध्यायग्रहणं वक्ष्यमाणो विशेषो वक्ष्यमाणस्य स्वाध्यायस्यैव यथा स्यादिति। कः पुनरसौ। 'स यावन्मन्येत तावदधीत्ये'ति। किं सिद्धं भवति। प्रणवव्याहृतिसावित्र्यात्मकस्य वक्ष्यमाणोक्तस्य स्वाध्यायस्य नित्यत्वं सिद्धं भवति॥ ५॥

स्वाध्यायमाह—

**ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीति॥ ६॥**

कल्पशब्देन सूत्राण्युच्यन्ते। कथं पुनर्नित्ये स्वाध्यायाध्ययने अनित्याना सूत्राणां विधानमुपपद्यते, तदाम्ने-

नित्यत्वात् । यथा पशोरनित्यस्य नित्ये ब्राह्मणवाक्ये दर्शनं तद्वत् । एतेन इतिहासपुराणानि व्याख्यातानि । गाथाः 'तदेषाभियज्ञगाथा गीयते' इत्याद्युदाहृताः । नाराशंसीः नराशंसदेवत्याः 'नराशंसमिह प्रियमि'त्याद्या ऋचः । आसां पृथग् ग्रहणं फलविशेषविधानार्थम् । इतिहासो महाभारतम् । पुराणं वायुप्रोक्तादि ॥ ६ ॥

ऋगादीनामध्ययने फलविशेषमाह —

**यदृचोऽधीते पयआहुतिभिरेव तद्देवतास्तर्पयति, यद्यजूंषि घृताहुतिभिः, यत्सामानि मध्वाहुतिभिः, यदथर्वाङ्गिरसः सोमाहुतिभिः, यद् ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृताहुतिभिः ॥ ७ ॥**

यथा पयःप्रभृतीनामाहुतिभिर्देवतास्तृप्यन्ति एवमृगादीनामध्ययनेनेत्युक्तं[2] भवति । द्वितीयादिषु यद्यजूंषीत्यादिष्वेवेत्यादेरनुषङ्गः ॥ ७ ॥

न केवलं देवतास्तर्पयति, पितॄनपीत्याह—

**यदृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधोपक्षरन्ति, यद्यजूंषि घृतस्य कुल्याः, यत्सामानि मध्वः कुल्याः, यदथर्वाङ्गिरसः सोमस्य कुल्याः, यद् ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कुल्याः ॥ ८ ॥**

कुल्याः क्षुद्रनद्यः । ऋगादीनामध्ययने पयःप्रभृतीनां कुल्या अस्याध्येतुः पितॄन् स्वधा भूत्वोपक्षरन्ति, उप-

१. 'त् पशुवत् । य' ब. पाठः. २. 'र्पा' ग. पाठः.

तिष्ठन्ते । स्वधेति पितॄणामन्ननाम । अस्य पितॄनित्यादेश्च द्वितीयादिष्वनुषङ्गः ॥ ८ ॥

ऋगादीनां समस्तानामध्ययने प्राप्ते विशेषमाह —

**स यावन्मन्येत तावदधीत्यैतया परिदधीत ॥ ९ ॥**

स यावदध्येतुं शक्यं मन्यते देशकालावस्थानां तावदधीत्य एतया वक्ष्यमाणयर्चा परिदधीत समापयेत् । परिदधीतेति वचनं परिधानीयाधर्मस्य त्रिरभ्यासस्य प्राप्त्यर्थम् ॥ ९ ॥

तामृचमाह —

**नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यो नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमीति ॥ १० ॥**

इति हरदत्ताचार्यमिश्रकृतायामाश्वलायनगृह्यवृत्तौ
तृतीयाध्याये द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

**देवतास्तर्पयति ॥ १ ॥**

प्रीणयति । केन, उदकेन तर्पणस्य तथा प्रसिद्धत्वात् । अप आप्लुत्येति च प्रकरणात् । तच्चाञ्जलिना कर्तव्यम् । जलाञ्जलिरिति हि तर्पणं प्रसिद्धम् । अन्ये त्वनादेशाद्दक्षिणेन पाणिना कुर्वन्ति । अपरे तु सव्योपगृहीतेन दक्षिणेन ॥ १ ॥

---

१. 'न' ग. घ. पाठ.

**प्रजापतिर्ब्रह्मा वेदा देवा ऋषयः सर्वाणि चच्छन्दांस्योङ्कारो वषट्कारो व्याहृतयः सावित्री यज्ञा द्यावापृथिवी अहोरात्राणि सांख्याः सिद्धाः समुद्रा नद्यो गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसो नागा गावो वयांसि विप्रा यक्षा रक्षांसि भूतान्येवमन्तानि ॥ २ ॥**

प्रजापतिस्तृप्यत्विति प्रथमो मन्त्रः। एवमुत्तरेषु तृप्यत्विति सर्वत्रानुषङ्गः[१], द्विवचनान्ते तृप्यतामिति, बहुवचनान्ते तृप्यन्त्विति। एकः समास एको मन्त्रः। भूतान्येवमन्तानीति नायं मन्त्रः, किं तर्हि आदित आरभ्य रक्षांसीत्येवमन्तानि भूतानीत्यर्थः। एवं हि 'अथर्षय' इति सङ्गतं भवति। अन्ये तु भूतानि तृप्यन्तु एवमन्तानि तृप्यन्त्विति मन्त्रावेव कृत्वा तर्पयन्ति। एतेषां प्राजापत्येन तीर्थेन तर्पणम् ॥ २ ॥

**अथर्षयः ॥ ३ ॥**

तर्पयितव्या वक्ष्यन्त इति शेषः ॥ ३ ॥

**शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्ता इति ॥ ४ ॥**

अत्र[२] इतिशब्द ऋषीणामवसानप्रदर्शनार्थः। एतेषां दैवेन तीर्थेन तर्पणम्। केचिन्निवीतमपि कुर्वन्ति, अपरे न, वचनाभावात्। प्राचीनावीतीति वक्ष्यमाणशेषः ॥ ४ ॥

---

१. 'ति समासेषु च ष', २. 'न्ते', ३. 'षः तस्मात् पूर्वं विशिष्टम्। प्रा' ष. पाठ

प्राचीनावीती सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यमहाभारतधर्माचार्या जानन्तिवाहविगार्ग्यगौतमशाकल्यवाभ्रव्यमाण्डव्यमाण्डूकेया गर्गीवाचक्नवी वडवाप्रातिथेयी सुलभामैत्रेयी कहोलं कौषीतकं महाकौषीतकं भरद्वाजं पैङ्ग्यं महापैङ्ग्य सुयज्ञं शाङ्खायनमैतरेयं महैतरेयं बाष्कलं शाकलं गार्ग्यं सुजातवक्त्रम् औदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्ये आचार्यास्ते सर्वे तृप्यन्तु ॥ ५ ॥

सुमन्तुप्रभृतीनामपि पितृष्वेवान्तर्भावः प्राचीनावीतदर्शनात् । कल्पान्तरेष्वपि वैशम्पायनप्रभृतीनामेव तर्पणं विहितम् । गर्गवाचक्नवीति प्रसिद्धः पाठः । कहोलमित्यादिषु द्वितीयानिर्दिष्टेषु तर्पयामीति भवति । कहोलं तर्पयामीति । ये चान्ये इत्यादिरेको मन्त्रः ॥ ५ ॥

प्रतिपुरुषं पितॄंस्तर्पयित्वा गृहानेत्य यद्ददाति सा दक्षिणा ॥ ६ ॥

मातॄणां मातामहादीनां मातामह्यादीनां च तर्पणमिच्छन्ति । तत्र विप्रतिपत्तिः । केचित् पित्रादीनां नाम्ना तर्पणमिच्छन्ति देवदत्तं यज्ञदत्तं विष्णुमित्रमिति । एवं मात्रादीनामपि । प्रसिद्धस्त्वाचारः पितरं तर्पयामीत्यादि, एवं पितामहं प्रपितामहं मातरं पितामहीं प्रपितामहीम् इति । एवं मातामहवर्गेऽपि । एतेषां पितृतीर्थेन तर्पणम् । अत्र याज्ञवल्क्यः —

१. 'पैं गु' ख ग घ पाठ

"कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य तु ।
प्रजापतिपितृब्रह्मदैवतीर्थान्यनु क्रमात् ॥"

इति। एवं तर्पयित्वा गृहानेत्य वैश्वदेवान्ते अतिथिभ्यो यद् ददाति सा दक्षिणा ॥ ६ ॥

ब्रह्मयज्ञस्य पूर्वोक्तनियमासम्भवेऽप्यवश्य कर्तव्यो ब्रह्मयज्ञो यथाकथञ्चिदित्याह —

अथापि विज्ञायते स यदि तिष्ठन्नासीनः शयानो वा[1] यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टं भवतीति ॥ ७ ॥

यस्य यस्य क्रतोः सम्बन्धिनं ब्राह्मणभागं मन्त्रभागं वाधीते तिष्ठन्नासीनः शयानो वा भूत्वा तेन तेन क्रतुना[2]स्येष्टं भवतीति । ब्राह्मणं भवतीत्यर्थः ॥ ७ ॥

विज्ञायते तस्य द्वावनध्यायौ यदात्माशुचिर्यद्देशः ॥ ८ ॥

तस्य ब्रह्मयज्ञस्य द्वावेवानध्यायौ यदशुचिरात्मा शावाद्याशौचेन चण्डालादिस्पर्शेन वा देशो वाप्यशुचिः[4] एतावानेव ब्रह्मयज्ञस्यानध्यायः नाष्टम्यादिरिति विज्ञायत इति ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
तृतीयाध्याये तृतीय खण्ड ।

---

१ 'ति य यं क्रतुं य', २. 'स्येव विज्ञायते वा', ३. 'र्थ. पुनश्च वि', ४. 'चि अवस्कारादि ए' घ पाठ

अथ चतुर्थः खण्डः।

**अथातोऽध्यायोपाकरणम् ॥ १ ॥**

अथशब्दोऽधिकारार्थः। अध्यायोपाकरणं नाम कर्म वक्ष्यते। अधीयत इत्यध्यायः स्वाध्यायः, स उपाक्रियते विधिवदारभ्यते यत्र कर्मणि तदध्यायोपाकरणम्। अतःशब्दो हेत्वर्थो यस्मादतोऽध्ययनसिद्धिः अत एतद् वक्ष्यत इति ॥

**ओषधीनां प्रादुर्भावे श्रवणेन ॥ २ ॥**

ओषधीनां प्रादुर्भावे सति श्रवणेन नक्षत्रेण कर्तव्यम्। 'नक्षत्रे च लुपि' इत्यधिकरणे तृतीया। कदा पुनरोषधीनां प्रादुर्भावः। श्रावणे भाद्रपदे वा मासि। तयोर्हि प्रकृत्या वृष्टिर्भवति। आषाढे तु कादाचित्की। यद्येवं श्रावणे भाद्रपदे वेति वक्तव्यं, किमोषधीनां प्रादुर्भाव इति परोक्षवचनेन। उच्यते। ओषधिप्रादुर्भावकृतोऽयं विकल्पो यथा स्यात् मासस्वरूपप्रयुक्तो विकल्पो मा भूदिति ॥ २ ॥

**श्रावणस्य पञ्चम्यां हस्तेन वा ॥ ३ ॥**

यद्वा श्रावणस्य मासस्य पञ्चम्यामेतत् कर्म कर्तव्यम्। सा यदि पञ्चमी हस्तेन युज्यते ॥ ३ ॥

**आज्यभागौ हुत्वाज्याहुतीर्जुहुयात् सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये छन्दोभ्यश्च ॥ ४ ॥**

आज्यभागवचनं नित्यार्थम्। तथा 'आज्यभागौ पाकयज्ञेष्वि'ति विकल्पो मा भूदिति। अनुक्तद्रव्यत्वादेवाज्याहुतित्वे सिद्धेऽप्याज्याहुतिवचनं नियमार्थम्, उत्सर्जने वक्ष्यति

'एताभ्यो देवताभ्योऽन्नेन हुत्वे'ति तत्राप्येता आज्याहुतयो यथा स्युः अन्नाहुतयो मा भूवन्निति । चतुर्थ्यन्तैः सावित्र्यादिभि-र्नवभिः[1] स्वाहाकारान्तैर्होमः ॥ ४ ॥

अथ दधिसक्तून् जुहोत्यग्निमीळे पुरोहितमित्येका कुशुम्भकस्तदब्रवीद् आयदंस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामन्ते विश्वं भुवनमधिश्रितं गन्ता नो यज्ञं यज्ञियाः सुशमियो न स्वो अरणः प्रतिचक्ष्व विचक्ष्वाग्ने याहि मरुत्सखायत्तेराजन्कृतं हवि-रिति द्वयृचाः समानीव आकूतिरित्येका तच्छंयोरावृ-णीमह इत्येका ॥ ५ ॥

आज्याहुतिभ्योऽनन्तरं दधिमिश्रान् सक्तून् जुहोति । लौकिका दधिसक्तवो विधिवत् संस्कृताः। तानेतैः प्रतिमन्त्रं जुहुयात् । कुशुम्भक इत्याद्या द्व्यृचाः। समानीव इति । शाकलस्य समाम्नायस्यान्त्या तदध्यायिनामेषा । तच्छंयोरिति बाष्कलस्य तदध्यायिनामेषा। उभयत्रैकाग्रहणं विस्पष्टार्थम् । द्वितीयाभावादेव द्व्यृचाधिकारस्य निवृत्तिः सिद्धा । अग्निमीळ इत्यत्र वक्ष्यमाणद्व्यृचत्वनिवृत्त्यर्थमेकाग्रहणम् ॥ ५ ॥

अध्येष्यमाणोऽध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा दधिसक्तून् प्राश्य ततो मार्जनम् ॥ ६ ॥

अध्येष्यमाण आचार्यः । अध्याप्याः शिष्याः । अत्राऽध्येष्यमाण इत्यध्यापनं विवक्षितम् । तदेवं ह्यात्मापेक्षमध्य-

---

१. 'भिः स्वा' ख.ग.घ. पाठः.

यनं भवति पारायणादिवत् । शिष्यार्थमध्यापनम् । अपर आह — अध्येष्यमाण इति वचनादध्याप्याभावेऽपि पारायणब्रह्मयज्ञाध्ययनार्थमप्येतत् कर्म भवति । एताभ्यो देवताभ्य इति वचनं सर्वासां देवतात्वज्ञापनार्थम् । तेन सावित्र्याद्या अग्न्याद्याश्चोभय्यो गृह्यन्ते । होमद्रव्यमप्युभयम् । हुत्वेति वचनं होमकालेऽन्वारम्भणं यथा स्यादिति । स्विष्टकृतो वचनं प्रधानानन्तरं स्विष्टकृद् यथा स्यादिति । कथं पुनरन्यत्र प्रसङ्गः एतदेव ज्ञापयत्यागन्तुकानि प्राक्स्विष्टकृतो भवन्ति ततः स्विष्टकृदिति दधिसक्तुप्राशनं शिष्याणामपि । ततो मार्जनं कुर्युरिति शेषः । तत्परिस्तरणैरञ्जलिमन्तर्धायेत्याद्युक्तम् ॥

अपरेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भान् कृत्वा ब्रह्माञ्जलिकृतो जपेत् ॥ ७ ॥

दर्भान् कृत्वा प्रागग्रान् दर्भान् निधाय ब्रह्माञ्जलिकृतः दक्षिणोत्तरौ पाणी पवित्रवन्तौ सन्दधाति एष ब्रह्माञ्जलिः स कृतो येन स तथोक्तः । 'आहिताग्न्यादिषु' इति निष्ठान्तस्य परनिपातः ॥ ७ ॥

ओंपूर्वा व्याहृतयः ॥ ८ ॥

द्वितीयार्थे प्रथमा । अत्र जपतिचोदनायामप्युच्चैः प्रयोगः, माणवकार्थत्वादुच्चारणस्य ॥ ८ ॥

सावित्रीं च चतुरभ्यस्य वेदादिमारभेत् ॥ ९ ॥

चशब्दादोंपूर्वामिति गम्यते । सावित्रीं चोंपूर्वां चतुरभ्यस्यति । यथासमाम्नायमर्धर्चशोऽभ्यस्य वेदादिमारभेत् ।

१. 'कुतूले' ग. क. पाठः.

व्यत्ययेन परस्मैपदम् आरभेत। वेदस्यादिं सूक्तमनुवाकमध्यायं वा । एतच्च सर्वमध्याप्यानामपि समानम्। अपर आह — जपेदित्यत्र प्रकारविधिः चतुरभ्यस्येति जप्यास्त्वोङ्कारादयः। तेन ओङ्कारव्याहृतीनामपि चतुरभ्यासो भवति । अस्मिन् पक्षे जपेदित्यतिरिच्यते ॥ ९ ॥

तथोत्सर्गे ॥ १० ॥

उत्सर्गो वक्ष्यते । तत्रापि तथा कर्तव्यं, यथोपाकरणे। तत्रैके कृत्स्नस्य कर्मणोऽतिदेशं मन्यन्ते। तन्न। यदि कृत्स्नस्य कर्मणोऽतिदेशोऽभविष्यद् एतेनोत्सर्जनमिति तृतीयया निरदेक्ष्यद् यथा 'एतेन गोदानम्' 'एतेन वापनादी'ति। तस्माद् वेदादिमारभेदित्येतदेवातिदिश्यते । अन्यदुत्सर्जनं कर्म कथं भविष्यति ! वक्ष्यति — 'एताभ्यो देवताभ्योऽन्नेन हुत्वे'ति। तेनोत्सर्जने प्राशनमार्जने[2] न भवतः ॥ १० ॥

षण्मासानधीयीत समावृत्तो ब्रह्मचारिकल्पेन ॥ ११ ॥

समावृत्तोऽप्युपाकृत्याधीयानो ब्रह्मचारिकल्पेन मधुमांसवर्जनेनाधीयीत। यः केवलानि वृत्तानि पारं नीत्वा जायामुपयम्य पश्चादधीते तस्य ग्रहणाध्ययनविषयमेतत् ॥ ११ ॥

यथान्यायमितरे ॥ १२ ॥

इतरे असमावृत्ता ब्रह्मचारिणो यथान्यायं मेखलाजिनदण्डभिक्षाचरणसमिदाधानादिभिरधीयीरन् ॥ १२ ॥

जायोपेयेत्येके ॥ १३ ॥

समावृत्तविषयमिदम् । ब्रह्मचारिकल्पेनेत्यस्यापवादः।

१. 'चानन्तरमति' ग. ङ. पाठः. २. 'ने म' ग. पाठः. ३. वेदानि पार्य नी' ख. ग. ङ. पाठः.

एक आचार्याः जायोपेया उपयन्तव्येति मन्यन्ते ॥ १३ ॥

नत्रोपपत्तिः —

प्राजापत्यं तत् ॥ १४ ॥

तद् जायोपयमनं प्राजापत्यम्, 'आसिञ्चतु प्रजापति-रि'ति दर्शनात्। रेतःसेचनं प्राजापत्यं तच्च प्रजार्थं तेन यदाह प्राजापत्यमिति प्रजार्थमित्येवैतदाह। यद्यप्यनुक्तमप्येतद् गम्यते जायोपयमनं प्रजार्थमिति। तथाप्युच्यते ऋतावेवोपगमनं यथा स्यादनृतौ मा भूदिति ॥ १४ ॥

वार्षिकमित्येतदाचक्षते ॥ १५ ॥

यदिदमुपाकृत्य षण्मासाध्ययनमेतद् वार्षिकमित्याचार्या आचक्षते वर्षर्तौ भवति वा प्रतिसंवत्सरं भवतीति वा। तथा च गौतमः —"श्रवणादि वार्षिकं प्रोष्ठपदीं वोपाकृत्याधीयीत छन्दांस्यर्धपञ्चमान् मासान् पञ्च दक्षिणायनं वा ब्रह्मचार्युत्सृष्टलोमा न मांसं भुञ्जीत द्वैमास्यो वा नियम इति"। समाप्तमुपाकरणम् ॥ १५ ॥

उत्सर्जनमुच्यते —

मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वापोऽभ्यवयन्ति ॥ १६ ॥

मध्यमाष्टकायामिति सामीपिकमधिकरणम्। तस्याः पूर्वा या पौर्णमासी तस्यामिदं भवति। एतच्च षण्मासानधीयीतेति पूर्वमुक्तत्वाल्लभ्यते। याः पूर्वोक्ताः सावित्र्याद्याः ताभ्योऽन्नेन होमः। तत्र सावित्र्यादीनामाज्यमेवेति पूर्वमुक्तम्।

१. 'ग' २ 'तदा' घ पाठ. ३. 'त तद् ]' ग. पाठ.

हुत्वा स्विष्टकृत् ततो वेदारम्भणं ततः शिष्टं तत् परिसमाप्यापोऽभ्यवयन्ति अवगाहन्ते ॥ १६ ॥

**एताश्चैव देवतास्तर्पयन्ति ॥ १७ ॥**

सावित्र्याद्या इति केचित् । अपरे तु देवतास्तर्पयन्तीत्यारभ्य यत्तर्पणं विहितं तदत्र कर्तव्यमिति मन्यन्ते ॥ १७ ॥

**आचार्यान् पितॄंश्च ॥ १८ ॥**

आचार्याः सुमन्तुजैमिनिप्रभृतयः । पितरस्तत्रैवोक्ताः ॥

**एतदुत्सर्जनम् ॥ १९ ॥**

एतत् कर्मोत्सर्जनामिति शास्त्रेषु[२] प्रसिद्धम् ॥ १९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ[१] तृतीयाध्याये चतुर्थः खण्डः ।

---

अथ पञ्चमः खण्डः ।

**अथ काम्यानां स्थाने काम्याः ॥ १ ॥**

अथशब्दो वाक्यारम्भे । यानि कर्माणि त्रेतायां काम्यानि तेषां स्थाने काम्याः पाकयज्ञाः कर्तव्याः । तत्रेष्टीनां स्थाने स्थालीपाकाः पशूनां स्थाने पशवः । यद्येवं सोमस्य स्थाने सोमोऽपि प्राप्नोति । स्यादेवेत्येके । अन्ये त्वाहुः— अस्मिन् गृह्ये पशुकल्पः स्थालीपाककल्पश्चोक्तः न सोमकल्पः, तेन सोमस्थाने सोमो न स्यादिति ॥ १ ॥

**चरवः ॥ २ ॥**

चरवश्च भवन्ति काम्यानां स्थाने काम्याः । पूर्वेणैव सिद्धे नियमार्थमिदं चरव एव न सान्नाय्याद्यन्यद् द्रव्यमिति ।

---

१. 'न् क्रमीन् पि', २. 'शास्त्रेषु' इ. पाठ.

पशूनां तु निवृत्तिर्न भवति प्राणित्वेन विजातीयत्वात् । आयुष्कामेष्ट्यामित्यारभ्य काम्या इष्टयः, तासां स्थाने काम्याश्चरवः । 'वायव्यं श्वेतमालभेत भूतिकाम' इत्याद्याः काम्याः पशवः ॥ २ ॥

**तानेव कामानाप्नोति ॥ ३ ॥**

यावान् कामस्तेन कर्मणावाप्यते, यस्यायं स्थाने भवति, तावान् कामोऽनेनावाप्यते इत्युक्तं भवति । अन्यथाल्पत्वादस्य कर्मणस्तमेव काममल्पमवाप्नोतीति शङ्क्येत । तस्मादयमारम्भः । एवं सति महतां श्रौतकर्मणामारम्भोऽपार्थकः स्यात् । तस्मादेवं कर्तव्यं तत्स्थानोपदेशात् तद्धर्मका एते स्युः । ततश्च दक्षिणा अपि प्रसज्येरन् । तत्र नियमः क्रियते कामा एव भवन्ति न दक्षिणा इति ॥ ३ ॥

**अथ व्याधितस्यातुरस्य यक्ष्मगृहीतस्य वा षडाहुतिश्चरुर्मुञ्चामि त्वा हविषा जीवनाय कमित्येतेन ॥ ४ ॥**

अथशब्दः पूर्ववत् । व्याधितादयो व्याख्याताः । षडाहुतिश्चरुर्होतव्यः मुञ्चामि त्वेत्यनेन सूक्तेन पञ्चर्चेन । स्विष्टकृत् षष्ठो भवति । षड्ग्रहणादाज्यभागौ न भवतः ॥ ४ ॥

**स्वप्नममनोज्ञं दृष्ट्वाद्यानो देव सवितः यच्च गोषु दुःष्वप्न्यमिति पञ्चभिरादित्यमुपतिष्ठेत ॥ ५ ॥**

अमनोज्ञमशुभम् । अद्यान इत्येका यच्च गोष्विति पञ्च एताभिः षड्भिरादित्यमुपतिष्ठेत ॥ ५ ॥

---

१. 'न्याय' ख. ग. पाठ.

**यो मे राजन्युज्यो वा सखा वेति वा ॥ ६ ॥**

वाशब्दः समुच्चये । उपस्थानभेदात्तु पृथगुपदेशः । षड्भिरेकमुपस्थानम् । उपस्थानानन्तरमनया । तयोः समुच्चयः ॥ ६ ॥

**क्षुत्वा जृम्भित्वामनोज्ञं दृष्ट्वा पापकं गन्धमाघ्रायाक्षिस्पन्दने कर्णध्वनने च सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां मयि दक्षक्रतू इति जपेत् ॥ ७ ॥**

क्षुतादिषु कृतेषु सुचक्षा इत्यादिमन्त्रं जपेत् ॥ ७ ॥

**अगमनीयां गत्वायाज्यं याजयित्वाप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं वोपहत्य पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः पुनर्द्रविणमैतु मा पुनर्ब्राह्मणमैतु मा स्वाहा । इमे ये धिष्ण्यासो अग्नयो यथास्थानमिह कल्पन्तां वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यन्तरं मृतस्य केतुः स्वाहेत्याज्याहुतीर्जुहुयात् समिधो वा जपेद्वा ॥ ८ ॥**

अगमनीया रजस्वला । अयाज्योऽभिशस्तादिः । अप्रतिग्राह्यं विषशस्त्रादि । चैत्योऽग्निः तत्र भवो यूपश्चैत्यः । उपहत्य स्पृष्ट्वा । एतेषु कृतेष्वेताभ्यां मन्त्राभ्यामेवं कुर्यात् ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ

पञ्चमः खण्डः ।

---

१. 'नं' घ. पाठः. २. 'व' ङ. पाठः. ३. 'क्षि' घ. पाठः.
४. 'त्याहु' ख. ग. पाठः.

अथ षष्ठः खण्डः।

अव्याधितं चेत् स्वपन्तमादित्योऽभ्यस्तमियाद्वाग्यतोऽनुपविशन् रात्रिशेषं भूत्वा येन सूर्य! ज्योतिषा बाधसे तम इति पञ्चभिरादित्यमुपतिष्ठेत॥ १॥

अव्याधितो यः स्वपिति तं प्रति यद्यादित्योऽस्तं गच्छेत् तदा वाग्यतो भूत्वानुपविशन् रात्रिशेषं सर्वमेव रात्रिं तिष्ठन् व्युष्टायां येन सूर्येति पञ्चभिरृग्भिरादित्यमुपतिष्ठेत। तस्येदं प्रायश्चित्तम्॥ १॥

अभ्युदियाच्चेदकर्मश्रान्तमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तराभिश्चतसृभिरुपस्थानम्॥ २॥

यः कर्मणा गुरोरभ्यङ्गादिना श्रान्तो न भवति तमकर्मश्रान्तम् अनभिरूपं कर्म नृत्तदर्शनादि तेन वा श्रान्तमप्यव्याधितं स्वपन्तमादित्यश्चेदभ्युदियात् तदा वाग्यत इति समानं वाग्यतोऽनुपविशन् अहःशेषं भूत्वेत्यूहेन। एवं भूत्वोत्तराभिश्चतसृभिर्यस्य ते विश्वा भुवनानि केतुनेत्यादिभिरस्तं यन्तमुपतिष्ठेत॥ २॥

सन्ध्योपासनमाह —

यज्ञोपवीती नित्योदकः सन्ध्यामासीत वाग्यतः सायमुत्तरापरमभिमुखोऽन्वष्टमदेशमर्धास्तमिते मण्डले आनक्षत्रदर्शनात्॥ ३॥

यज्ञोपवीती भूत्वा नित्योदकः नित्यमुदककर्म प्रोक्षणाचमनादिकं कृतं येन स एवमुच्यते एवंभूतः सन्ध्यामा-

१. 'स्येताभि' ग० ङ० पाठः। २. 'मुपासी' ख० पाठः।

सीत वाग्यतः सायं यावान् सन्ध्याकालः तावन्तमासीत। उत्तरापरमन्वष्टमदेशमभिमुखः प्रतीच्यां दिशि य उत्तरो भागः तस्याष्टधा विभक्तस्य योऽष्टमो देशः उत्तरत आरभ्य तमनु। तं प्रति कियन्तं कालमासीत। अर्धास्तमयादारभ्या-नक्षत्रदर्शनात्। एतावती सन्ध्या। वाग्यत इति वचनादेता-वन्तं कालं न सावित्र्यपि जप्या पश्चात्तु जप्या। तथा च जैमिनीये गृह्ये भारद्वाजगृह्ये च द्रष्टव्यम्। अन्ये तु स्मृतिषु दर्शनात् सावित्र्या जपमिच्छन्ति। वाग्यतवचनं तु लौकिक-वाक्यनिवृत्त्यर्थमित्याहुः॥ ३॥

एवं प्रातः प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात्॥ ४॥

एवं प्रातः सन्ध्यामुपासीत प्राङ्मुखस्तिष्ठन्नासीत आदित्यस्यामण्डलदर्शनात्। उत्तरपूर्वमन्वष्टमदेशमभिमुखः अर्धास्तमितेषु नक्षत्रेषु। तथा गौतमः— 'तिष्ठेत् पूर्वा-मासीतोत्तरां सज्योतिष्याज्योतिषो दर्शनाद्वाग्यत' इति। आपस्तम्बस्तूभयोरपि सन्ध्ययोरासनं वाग्यमनं चाह— 'स-न्ध्ययोश्च बहिर्ग्रामादासनं वाग्यतस्ये'ति[२]॥ ४॥

कपोतश्चेदगारमुपहन्यादनुपतेद्वा देवाः कपोत-इति प्रत्यृचं जुहुयाज्जपेद् वा॥ ५॥

कपोतः पक्षिविशेषः स चेदगारमुपहन्यात् तुण्डादिभि-र्घट्टयेद् अनुपतेद्वा तद्दुर्निमित्तम्। तस्येदं प्रायश्चित्तम्। देवाः

१. 'र्वा सन्ध्यामा' ख. पाठ.. २. 'ति। तलवकाराणां गृह्यमनुष्ठान चैवमेव। क' घ. पाठ'.

कपोत इति सूक्तेन प्रत्यृचमस्वाहाकारं जुहुयात्, सूक्तमेतद् जपेद् वा ॥ ५ ॥

वयमु त्वा पथस्पते इत्यर्थचर्यां चरिष्यन् ॥ ६ ॥

धनार्थी यदि कश्चिद् गच्छेत् तदा वयमु त्वा पथस्पते इति सूक्तेन प्रत्यृचं जुहुयात्, जपेद् वा ॥ ६ ॥

संपूषन् विदुषेति नष्टमधिजिगमिषन् ॥ ७ ॥

यो नष्टद्रव्यमधिजिगमिषति अधिगन्तुं लब्धुमिच्छति, स संपूषन् विदुषेत्यनेन सूक्तेन प्रत्यृचं जुहुयाज्जपेद्वा ॥ ७ ॥

मूढ्लो वा ॥ ८ ॥

यो वा मूढः अप्रज्ञः सोऽपि सूक्तेनानेन जुहुयाज्जपेद्वा ॥ ८ ॥

संपूषन्नध्वन इति महान्तमध्वानमेष्यन् प्रतिभयं वा ॥ ९ ॥

यो महान्तमध्वानं गमिष्यन् भवति अनल्पं प्रतिभयं वा गमिष्यन् भवति स सूक्तेनानेन प्रत्यृचं जुहुयाज्जपेद्वा ॥ ९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
तृतीयाध्याये षष्ठः खण्डः ।

---

अथ सप्तमः खण्डः ।

अथैतान्युपकल्पयेत समावर्तमानो मणी कुण्डले

**वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रगुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्याय च ॥ १ ॥**

अथ गुरुकुलात् समावर्तमान एतानि वक्ष्यमाणानि द्रव्याण्युपकल्पयेत संपादयेत् । तानि चात्मने चाचार्याय च कल्पयितव्यानि । किमर्थमिदमुच्यते, एतेषां द्रव्याणामुपकल्पनं यथा स्यादिति । नैतदस्ति प्रयोजनम् । उत्तरत्र[1] विनियोगवशादेवोपकल्पनं भविष्यति यथा 'आचार्योऽहतेन वाससा त्रिः प्रदक्षिणमि'त्यत्र । सत्यम् । एवमेव[2] तत् । इह त्वात्मने चाचार्याय चेत्युच्यते । तत्र न ज्ञायते कानि द्रव्याणि किं कुर्यादिति । तदर्थमिदमुच्यते । एवमप्येतानीति[3] वक्तव्यं, कथम्, एतेषामेवोत्तरत्र विनियोगो यथा स्यादिति । तेन 'अहते वाससी आच्छाद्ये'ति समावर्तमानस्यास्य वाससोरुपदिष्टमहतत्वमाचार्यवाससोरपि भवति । अन्यथोपकल्पनवेलायामनुपदिष्टत्वान्न[4] स्यात् । तत्र मणी द्वौ कुण्डले द्वे । सौवर्णे मणिबद्धे च ते भवतः, मणिकुण्डले आबध्नीतेत्युत्तरत्र दर्शनात् । मणिकुण्डले इति ये समासं पठन्ति तेषां 'मणिं कण्ठे प्रमुच्ये'ति दर्शनाद् यद्यपि समावर्तमानस्य मणिः सिद्धः तथाप्याचार्यस्य न स्यात् । तस्मान्मणी इति द्विवचनान्तमेव पठितव्यम् । वस्त्रयुगमेकैकस्मै । छत्रे द्वे । उपानद्युगं वस्त्रयुगवत् । दण्डौ द्वौ । स्रगुन्मर्दनं समाहारद्वन्द्वः । येन शरीरमुन्मर्द्यते तदुन्मर्दनम् । उष्णीषौ द्वौ ॥ १ ॥

---

१. 'क्वचि' छ. पाठः. २. 'मेत' ख. ग. ङ. पाठः. ३. 'ति न व', ४. 'ष्युपदिते व' घ. पाठः.

यद्युभयोर्न विन्देताचार्यायैव ॥ २ ॥

यद्युभयोरेतानि द्रव्याणि न लभेत तदा आचार्या-यैवोपकल्पयेत ॥ २ ॥

समिधं त्वाहरेदपराजिताया दिशो यज्ञीयस्य वृक्षस्य ॥ ३ ॥

अपराजिता पूर्वोत्तरा दिक् तस्याः समिध आहरेद् यज्ञीयस्य वृक्षस्य ॥ ३ ॥

तत्र गुणकामः—

आर्द्रामन्नाद्यकामः पुष्टिकामस्तेजस्कामो वा ॥ ४ ॥

अन्नाद्यपुष्टितेजसामन्यतमं यः कामयते स आर्द्रां समिधमाहरेत् ॥ ४ ॥

ब्रह्मवर्चसकाम उपवाताम् ॥ ५ ॥

उपवाता शुष्का ॥ ५ ॥

उभयीमुभयकामः ॥ ६ ॥

अन्नाद्यादीनामन्यतमं ब्रह्मवर्चसं च यः कामयते स उभयीमार्द्रामुपवातां च समिधमाहरेत् । अर्धशुष्कामित्युक्तं भवति ॥ ६ ॥

उपरि समिधं कृत्वा गामन्नं च ब्राह्मणेभ्यः प्र-दाय गौदानिकं कर्म कुर्वीत ॥ ७ ॥

तामाहृतां समिधमुपरि कृत्वा अनघो निधाय ब्राह्म-णेभ्योऽन्नं भोजनाय दत्त्वा गां दक्षिणां दत्त्वा गौदानिकं कर्म कुर्वीत । कर्मग्रहणस्य प्रयोजनं गोदान एव स्थित्वोक्तम् ॥ ७ ॥

---

१. 'मा' ख. ग., 'ना' घ. पाठ .

आत्मनि मन्त्रान् संनमयेत् ॥ ८ ॥

गौदानिके कर्मणि क्रियमाणे तत्रत्यान् मन्त्रानात्माभिमुखान् ऊहेत। ऋचामप्यूहप्राप्त्यर्थं वचनम्। 'ओषधे त्रायस्व मा स्वधीते मा मा हिंसीः तेन ब्रह्माणो वपते दम्म आयुष्मान् तेन म आयुषे वपामि मा म आयुः प्रमोषीरि'ति ॥ ८ ॥

एकक्लीतकेन शीतोष्णाभिरद्भिः स्नात्वा युवं वस्त्राणि पीवसा वसाथे इत्यहते वाससी आच्छाद्याश्मनस्तेजोऽसि चक्षुर्मे पाहीति चक्षुषी आञ्जयीत ॥ ९॥

यस्मिन् करञ्जफले एकं बीजं तदेकक्लीतकं तत्पिष्टमुन्मर्दनं पुरस्तादुपकल्पितम्। तेनोद्वर्तितगात्रः शीतोष्णाभिरद्भिः स्नात्वा युवं वस्त्राणीति मन्त्रेणाहते वाससी आच्छादयति[२]। एकमन्तर्वासः अपरं बहिर्वासः। अश्मनस्तेजोऽसि चक्षुर्मे पाहीति मन्त्रेण ततश्चक्षुषी आञ्जयीत, सव्यं पूर्वं 'सव्यं हि पूर्वं मनुष्या अञ्जत' इति श्रुतेः ॥ ९ ॥

अश्मनस्तेजोऽसि श्रोत्रं मे पाहीति मणिकुण्डले आवध्नीत अनुलेपनेन पाणी प्रलिप्य मुखमग्रे ब्राह्मणोऽनुलिम्पेत् ॥ १० ॥

अनुलेपनं चन्दनादि। ब्राह्मणो मुखं प्रथममनुलिम्पेत्। ततोऽन्यान्यङ्गानि ॥ १० ॥

---

१. 'मि शुद्धि शिरोमा' क पाठ २. 'सीति' ङ पाठ.

**बाहू राजन्यः ॥ ११ ॥**

अग्रेऽनुलिम्पेत् ॥ ११ ॥

**उदरं वैश्यः ॥ १२ ॥**

पूर्ववत् ॥ १२ ॥

**उपस्थं स्त्री ॥ १३ ॥**

तद्वत् ॥ १३ ॥

**ऊरू सरणजीविनः ॥ १४ ॥**

ये सरणेन गतागतेन जीवन्ति दूताः ते ऊरू अग्रेऽनुलिम्पेरन् ॥ १४ ॥

**अनार्तस्य[1] नार्तोऽहं भूयासमिति स्रजमपिनह्यीत ॥**

अपिनह्येत् ॥ १५ ॥

**न मालोक्ताम् ॥ १६ ॥**

मालाशब्दोक्तां स्रजं नापिनह्येव ॥ १६ ॥

**मालेति चेद् ब्रूयुः स्रगित्यभिधापयीत ॥ १७ ॥**

यद्यवशादज्ञानाद्वा मालेति ब्रूयुः परिकर्मिणस्तदा तान् स्रगिति वाचयेत् ततोऽपिनह्येत् ॥ १७ ॥

**देवानां प्रतिष्ठे स्थः सर्वतो मा पातमित्युपानहावास्थाय दिवश्छन्नासीतिच्छत्रमादत्ते ॥ १८ ॥**

गतार्थम् ॥ १८ ॥

**वेणुरसि वानस्पत्योऽसि सर्वतो मा पाहि इति वैणवं दण्डम् ॥ १९ ॥**

आदत्ते ॥ १९ ॥

---

१. 'र्तो' स. प. पाठ

आयुष्यमिति सूक्तेन मणिं कण्ठे प्रमुच्योष्णीषं कृत्वा तिष्ठन् समिधमादध्यात्

स्मृतं निन्दा च विद्या च श्रद्धा प्रज्ञा च पञ्चमी।
इष्टं दत्तमधीतं च कृतं सत्यं श्रुतं व्रतम्॥

यदग्ने सेन्द्रस्य सप्रर्षिकस्य सप्रर्षिराजस्य सपितृकस्य सपितृराजस्य साकाशस्य सातीकाशस्य सानूकाशस्य सप्रतीकाशस्य सदेवमनुष्यस्य सगन्धर्वाप्सरस्कस्य सहारण्यैश्च पशुभिर्ग्राम्यैश्च यन्म आत्मन आत्मानि व्रतं तन्मे सर्वं व्रतमिदमहमग्ने सर्वव्रतो भवामि स्वाहेति॥ २०॥

तत आयुष्यमिति सूक्तान्ते मणिं कण्ठे बद्ध्वा हतेन वाससा उष्णीषं शिरोवेष्टनं कृत्वा तथैव तिष्ठन् पूर्ववदुपरि कृतां समिधमादध्यात् स्मृतं निन्दा चेति मन्त्रेण सर्वतोव्र भवामि स्वाहेत्यन्तेन॥ २०॥

ममाग्ने वर्च इति प्रत्यृचं समिधोऽभ्यादध्यात्॥ २१॥

तत्र नव समाम्नाताः। खैलिकी दशमी अर्वाञ्चमिन्द्रममुतो हवामह इति तस्या अपि ग्रहणमित्याहुः॥ २१॥

यत्रैनं पूजयिष्यन्तो भवन्ति तत्रैतां रात्रिं वसेत्॥ २२॥

एनं समावृत्तं यत्र गृहे पूजयिष्यन्तो भवन्ति तत्र

१. 'प्रतिमु' घ. पाठ. २. 'तमिति म' ङ. पाठ. ३. 'शिरा' ख. पाठः. ४. 'सम' ग. पाठ ५. 'स', ६. 'ति च म' ङ. पाठः. ७. 'विष्यन्ति' ख. पाठ-

पितृगृहे रात्रिमेतां वसेत्। पूजा च मधुपर्कः 'स्नातकायोपस्थिताये'ति वचनात्॥ २२॥

**विद्यान्ते गुरुमर्थेन निमन्त्र्य कृत्वानुज्ञातस्य वा स्नानम्॥ २३॥**

विद्यासमाप्तौ गुरुमर्थेन प्रयोजनेन निमन्त्र्य कमर्थं त आहरिष्यामीत्युक्त्वा तेनोक्तं च कृत्वा तत एतत् समावर्तनं कर्तव्यम्। अनुज्ञातस्य वा वत्स! त्वद्गुणैरेवाहं तोषितः अलमर्थेन अनुजानामि त्वां गृहाश्रमायेत्येवमुक्तस्य वा कर्तव्यम्॥ २३॥

**तस्यैतानि व्रतानि भवन्ति॥ २४॥**

तस्य स्नातकस्यैतानि वक्ष्यमाणानि व्रतानि भवन्त्यामरणात्॥ २४॥

**न नक्तं स्नायात् न नग्नः स्नायात् न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात् वर्षति न धावेन्न वृक्षमारोहेन्न कूपमवरोहेन्न संशयमभ्यापद्येत॥ २५॥**

संशयः प्राणसंशयस्तं नाभ्यापद्येत न प्रतिपद्येत। अन्यत् स्पष्टम्॥ २५॥

किमर्थं पुनरेवमस्य रक्षोपदिश्यत इत्यत्राह —

**महद्‍ वै भूतं स्नातको भवतीति विज्ञायते॥ २६॥**

योऽयं स्नातकः स महद्भूतं भवति यथा पृथिव्यादीनि महाभूतान्युपकारकाणि एवमयं सर्वाश्रमाणामुपकारक इति विज्ञायते। आह मनुः —

१. 'कमर्थमाहृत च' ङ. पाठ.. २. 'क्षेवमुप' ग. ग. ङ. पाठः.

"यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः ॥"

इति ॥ २६ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
तृतीयाध्याये सप्तमः खण्डः ।

---

अथाष्टमः खण्डः ।

गुरवे प्रस्नक्ष्यमाणो नाम प्रब्रुवीत ॥ १ ॥

अथ समावृत्तं गुरुः प्रसृजति गृहान् प्रति विसृजति स तेन प्रस्नक्ष्यमाणस्तस्मै गुरवे तस्यैव नाम संबुद्ध्या प्रब्रुवीत यज्ञशर्मन्निति ॥ १ ॥

इदं वत्स्यावो भो इति उच्चैरूर्ध्वं नाम्नः ॥ २ ॥

अथ नाम्न ऊर्ध्वमिदं वत्स्यावो भो इत्युच्चैः प्रब्रुवीत। नाम्न ऊर्ध्वमुच्चैरिति वचनान्नामोपांशु भवति। वत्स्याव इति केवलोऽपि वसिर्विपूर्वस्यार्थे द्रष्टव्यः । एतावन्तं कालं सहोषितौ स्वः अथेदानीं विभिद्य वासं करिष्यावः भो यज्ञशर्मन्निति मन्त्रार्थः । इदमिति च क्रियमाणक्रियानिर्देशः यथा इदं गम्यत इति ॥ २ ॥

प्राणापानयोरुपांश्वामन्द्रैरिन्द्रहरिभिरिति च ॥ ३ ॥

प्राणापानयोरिति मन्त्रमुपांशु प्रब्रुवीत आमन्द्रैरित्यृचं च । ३ ॥

**अतो वृद्धो जपति ॥ ४ ॥**

अतःपरं वृद्ध आचार्यो जपति ॥ ४ ॥

जप्यमाह—

**प्राणापानयोरुरुव्यचास्त्वया प्रपद्ये देवाय सवित्रे परिददामीत्यृचं च ॥ ५ ॥**

प्राणापानयोरिति मन्त्रस्य पूर्वत्रैव कृत्स्नः पाठः कर्तव्यो न कृतः इह वा पठ्यतां पूर्वत्र वा कोन्वत्र विशेष इति । पूर्वत्रोपांश्वित्युक्तम् इह जपतीति तस्य प्रयोजन जपलक्षणमुपांशुत्वं गृह्यकर्मण्यनित्यमिति । तेन 'ब्रह्माञ्जलिकृतो जपेदि'त्यत्रोच्चैः प्रयोगः सिद्धो भवति ॥ ५ ॥

**समाप्य ओं प्राक् स्वस्तीति च जपित्वा माहित्रेणानुमन्त्र्य ॥ ६ ॥**

अतिसृजेदिति शेषः । आमन्द्रैरित्येतामृचं समाप्य ओं प्राक् स्वस्तीति च जपित्वा महित्रीणामवोऽस्त्विति सूक्तेनानुमन्त्र्यातिसृजेद् गुरुः शिष्यम् । महित्रीशब्दो यस्मिन् सूक्तेऽस्ति तन्माहित्रम् । विमुक्तादित्वादण् । विवत्स्याव इति लौकिक्या वाचातिसर्गः ॥ ६ ॥

**एवमतिसृष्टस्य न कुतश्चिद् भयं भवतीति विज्ञायते ॥ ७ ॥**

एवं माहित्रेणानुमन्त्र्य योऽतिसृष्टः तस्य न कुतश्चिद् भयं भवतीति ब्राह्मणं भवति[1] । माहित्रानुमन्त्रणस्य प्रशंसेयम् । इदं च कालान्तरेऽपि भवति । यो यस्य प्रियः स्यात्

१. 'पा' ख. ट. पाठः-

तथाविधत्वाद् ब्राह्मणस्य। एतदर्थमेव च ब्राह्मणमाकृष्टम्। आपस्तम्बोऽप्याह — 'यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभिरन्वीक्षेत स्वस्त्येव पुनरागच्छतीत्ययज्ञसंयुक्तः कल्प' इति ॥ ७ ॥

वयसाममनोज्ञां वाचं[2] श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्ते जपेद् देवीं वाचमजनयन्त देवा इति च ॥ ८ ॥

यदायं स्नातको मार्गे वान्यत्र वा पक्षिणां प्रतिकूलां वाचं शृणोति तदा नैमित्तिकोऽयं जपः। ८ ॥

स्तुहि श्रुतं गर्तसदं युवानमिति मृगस्य ॥ ९ ॥

अमनोज्ञां वाचं श्रुत्वेत्यनुवर्तते ॥ ९ ॥

यस्या दिशो विभीयाद्यस्माद्वा तां दिशमुल्मुकमुभयतः प्रदीप्तं प्रत्यस्येन्मन्थं वा प्रसव्यमालोड्याभयं मित्रावरुणा मह्यमस्त्वर्चिषा शत्रून् दहन्तं प्रतीत्यमाज्ञातारं मा प्रतिष्ठां विन्दन्तु मिथो भिन्दाना उभयं तु मृत्युमिति संसृष्टं धनमुभयं समाकृतमिति मन्थं न्यञ्चं करोति ॥ १० ॥

यस्या दिशो यस्माद्वा पुरुषाद् विभीयात् तां दिशं प्रति पुरुषोऽपि स यस्यां दिशि वसति तां दिशं प्रति उभयतः प्रदीप्तं मूले चाग्रे च ज्वलन्तमुल्मुकम् अस्येत् क्षिपेत् अभयं मित्रावरुणेति मन्त्रेण। दधिमिश्राः सक्तवः मन्थः तं वा प्रस-

---

१. 'ज्ञा', २. 'चः' ख. पाठः. ३. 'द' ख. ग. पाठः.

न्यग्रप्रदक्षिणमालोड्य न्यग्रं न्यग्भूतं करोति संसृष्टमिति मन्त्रेण ॥ १० ॥

सर्वतो भयादनाज्ञातादष्टावाज्याहुतीर्जुहुयात् पृथिवी वृता साग्निना वृता तया वृतया वर्र्या यस्माद् भयाद् बिभेमि तद्वारये स्वाहा। अन्तरिक्षं वृतं तद्वायुना वृतं तेन वृतेन वर्त्रेण यस्माद् भयाद् बिभेमि तद्वारये स्वाहा। द्यौर्वृता सादित्येन वृता तया वृतया वर्र्या यस्माद् भयाद् बिभेमि तद्वारये स्वाहा। दिशो वृतास्ताश्चन्द्रमसा वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद् भयाद् बिभेमि तद्वारये स्वाहा। आपो वृतास्ता वरुणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद् भयाद् बिभेमि तद्वारये स्वाहा। प्रजा वृतास्ताः प्राणेन वृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद् भयाद् बिभेमि तद्वारये स्वाहा। वेदा वृतास्ते छन्दोभिर्वृतास्तेभिर्वृतेभिर्वर्त्रेभिर्यस्माद् भयाद् बिभेमि तद्वारये स्वाहा। सर्वं वृतं तद् ब्रह्मणा वृतं तेन वृतेन वर्त्रेण यस्माद् भयाद् बिभेमि तद्वारये स्वाहेति ॥

सर्वतो भयादनाज्ञातनिमित्ताद्वा भयाद्यो बिभीयात् सोऽष्टावाज्याहुतीर्जुहुयात् पृथिवी वृतेत्यादिभिर्मन्त्रैः। अष्टग्रहणमाज्यभागस्विष्टकृन्निवृत्त्यर्थम्। आज्यग्रहणमाज्यहोमधर्मप्राप्त्यर्थम् ॥ ११ ॥

---

१. 'र्त्र्या' ग. क. पाठ. २. वरुणे' ख. पाठ'.

अथापराजितायां दिश्यवस्थाय स्वस्त्यात्रेयं जपति यत इन्द्र भयामह इति च सूक्तशेषम् ॥ १२ ॥

[1]अथाग्नेरपराजितायां दिशि स्थित्वा स्वस्त्यात्रेयेण दृष्टं स्वस्ति नो मिमीतामिति सूक्तं जपति प्राक्[2] पूर्णपात्रनिनयनाद् यत इन्द्र भयामह इति सूक्तशेषं जपति ॥ १२ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
तृतीयाध्यायेऽष्टमः खण्ड.।

अथ नवमः खण्डः ।

संग्रामे समुपोह्ळे राजानं सन्नाहयेत् ॥ १ ॥

युद्धे समुपस्थिते राजानं संनाहयेत् पुरोहितः ॥ १ ॥

आत्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय ॥ २ ॥

जपेदिति शेषः । यस्मिन् राजाधिरूढस्तस्य रथस्य पश्चादवस्थायैतत् सूक्तं जपेत् ॥ २ ॥

जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत्[3] ॥ ३ ॥

जीमूतस्येत्यनयर्चा कवचं सन्नाहं प्रयच्छेद् राज्ञे ॥

उत्तरया धनुः ॥ ४ ॥

धन्वनागा इत्येतया धनुः प्रयच्छेत् ॥ ४ ॥

उत्तरां वाचयेत् ॥ ५ ॥

वक्ष्यन्तीवेत्यृचं राजानं वाचयेत् ॥ ५ ॥

१. प्राग्नुर्दाची दिगपराजिताये' प. पाठ. २. 'क् पा' ष. पाठः. ३. 'च्छेद् राज्ञे भगा ट' ख. ग. पाठ.

स्वयं चतुर्थीं जपेत् ॥ ६ ॥

ते आचरन्तीत्यृचं पुरोहितो जपेत् ॥ ६ ॥

पञ्चम्येषुधिं प्रयच्छेत् ॥ ७ ॥

बह्वीनां पितेत्यृचा इषुधिं तूणीरं प्रयच्छेत् ॥ ७ ॥

अभिप्रवर्तमाने षष्ठीम् ॥ ८ ॥

अथ रथं प्रवर्तयति राजा तस्मिन्नभिप्रवर्तमाने रथे तिष्ठन्नित्यृचं जपेत् पुरोहितः ॥ ८ ॥

सप्तम्याश्वान् ॥ ९ ॥

तीव्रान् घोषानित्यृचाश्वान् योग्यत्वादनुमन्त्रयते पुरोहितः ॥ ९ ॥

अष्टमीमिषूनवेक्षमाणं वाचयति ॥ १० ॥

रथवाहनमित्यृचा इषूनवेक्षमाणं वाचयति ॥ १० ॥

अहिरिव भोगैः पर्येति बाहुमिति तलं नह्यमानम् ॥ ११ ॥

अहिरिव भोगैरित्येतया तलं चर्मादिनिर्मितं हस्तरक्षणं नह्यमानमनुमन्त्रयते[1] । पुरोहितः नह्यमानं राजानं वाचयतीत्यन्ये[2] ॥ ११ ॥

अथैनं सारयमाणमुपारुह्याभीवर्तं वाचयति प्रयोवां मित्रावरुणेति च द्वे ॥ १२ ॥

अथ सारयमाणः सारथिरारोहति तं सारयमाणमुपा-

१. 'अनुमन्त्रयते पु', २. 'न्ये । तल हस्तरक्षणम् ॥ अ' ख. ङ. पाठ .

रुह्य एनं राजानमभीवर्तम् अभीवर्तेन हविषेति सूक्तमभीवर्तदृष्टं वाचयति प्रयोवां मित्रावरुणेति च द्वे ऋचौ ॥ १२ ॥

**अथैनमन्वीक्षेताप्रतिरथशाससापर्णैः ॥ १३ ॥**

अथैनं युद्धे प्रविशन्तं अन्वीक्षेत अप्रतिरथम् आशुः शिशान इति सूक्तम् अप्रतिरथेन ऋषिणा दृष्टं, शासं शास इत्येति सूक्तं शासदृष्टं, सौपर्णं सुपर्णदृष्टम्। सौपर्णानां बहुत्वाद् विवक्षितमुदाहरिष्यति प्रधारयन्त्विति। एतैरप्रतिरथशाससौपर्णैरन्वीक्षणम् ॥ १३ ॥

**प्रधारयन्तु मधुनो घृतस्येत्येतत् सौपर्णम् ॥**

इदमत्र सौपर्णम् ॥ १४ ॥

**सर्वा दिशोऽनुपरीयायादित्यमौशनसं वास्थाय प्रयोधयेत् ॥ १५ ॥**

प्राच्यायाः सर्वा दिशोऽनुपरीयाय अनुपरिपूर्वाचातेर्ल्यप्। अनुपरीत्य प्रागादिमुखं रथं प्रवर्त्यैत्यर्थः। आदित्यमौशनसं वा यत्रादित्यः स्थितः शुक्रो वा तं दिग्भागमास्थाय तत्र स्थितः सन् प्रयोधयेद् युद्धमारम्भयेद् राजानं, न प्रत्यादित्यं नापि प्रतिशुक्रम् ॥ १५ ॥

**उपश्वासय पृथिवीमुत द्यामिति तृचेन दुन्दुभिमभिमृशेत् ॥ १६ ॥**

पुरोहितः ॥ १६ ॥

**अवसृष्टाः परापतेतीषून् विसर्जयेत् ॥ १७ ॥**

पुरोहित एव ॥ १७ ॥

यत्र बाणाः संपतन्तीति युध्यमानेषु जपेत् ॥

युध्यमानेषु योधेषु जपेत् पुरोहितः ॥ १८ ॥

संशिष्याद् वा संशिष्याद् वा ॥ १९ ॥

अथवा न स्वयं दुन्दुभिमर्शनादि कुर्याद् इदमित्थं मन्त्रैस्त्वया कर्तव्यमिति राजानं संशिष्यात् संदिशेत् । द्विरुक्तिरध्यायपरिसमाप्तिकृना ॥ १९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
अनाविलाया तृतीयाध्याये नवम खण्ड.।
तृतीयोऽध्यायः समाप्तः ।

अथ चतुर्थोऽध्यायः।

आहिताग्निश्चेदुपतपेत् प्राच्यामुदीच्यामपराजितायां वा दिश्युदवस्येत् ॥ १ ॥

उपतापो रोगः। प्राच्यादीनामन्यतमस्यां दिशि उदवस्येत् ग्रामान्निष्क्रम्य वसेत् ॥ १ ॥

किं प्रयोजनमित्याह —

ग्रामकामा अग्नय इत्युदाहरन्ति[1] ॥ २ ॥

एव के(तः ? ते) किमित्याह—

आशंसन्त एनं ग्राममाजिगमिषन्तोऽगदं कुर्युरिति विज्ञायते ॥ ३ ॥

अपिनामायं जीव्याद् अस्मांश्च यक्षीष्ट इत्येवमाशंसन्तोऽग्नयो ग्राममाजिगमिषन्त आगन्तुमिच्छन्तः एनं यजमानमगदं कुर्युरिति विज्ञायते ॥ ३ ॥

अगदः सोमेन पशुनेष्ट्येष्ट्वावस्येत् ॥ ४ ॥

यद्यसावगदः स्वस्थो भवति ततः सोमादीनामन्यतमेनेष्ट्वा अवस्येद् गृहं प्रविश्य वसेत्। सोमोऽग्निष्टोमः। पशुरैन्द्राग्नः। इष्टिराग्रयणेष्टिर्दर्शपूर्णमासौ वा। आ तस्मात् कालात् तत्र वसेदित्युक्तं भवति। अन्ये त्वाग्नेयमष्टाकपालं तदह(रे ? र्वे)च्छन्ति[2] ॥ ४ ॥

---

१. 'न्ति केचिद् ब्रह्मवादिनः। ए' क. पाठः. २. 'त' ख. ग. पाठः. ३. 'वे' घ. पाठः.

**अनिष्ट्वा वा ॥ ५ ॥**

अथ वानिष्ट्वैव प्रविशेदगदः ॥ ५ ॥

**संस्थिते भूमिभागं खानयेद् दक्षिणपूर्वस्यां दिशि दक्षिणापरस्यां वा दक्षिणाप्रवणं दक्षिणाप्राक्प्रवणं दक्षिणाप्रत्यक्प्रवणमित्येके यावानुद्बाहुकः पुरुषस्तावदायामं व्याममात्रं तिर्यक् वितस्तिमर्वाक् ॥ ६ ॥**

यदि संस्थितो मृतः स्यात् ततस्तस्मात् प्रदेशाद् दक्षिणपूर्वस्यां दिशि आग्नेय्यां दक्षिणापरस्यां निर्ऋत्यां वा भूमिभागं खानयेत् कर्ता पुत्रादिः । दक्षिणादिप्रवणं यथा स्यात् तथा खानयेत् । प्रमाणनिर्देशः—उत्क्षिप्तबाहुकः पुरुषो यावान् तावानायामो यस्य तं तावदायामम् । तिर्यक्प्रमाणेन व्याममात्रम् ।

"बाह्वोः सकरयोर्व्यामस्ततयोस्तिर्यगन्तरम्"

इति नैघण्टुकाः । अर्वाक्प्रमाणेन वितस्तिं वितस्तिप्रमितम् ।

कनिष्ठाङ्गुष्ठयोर्मध्यं वितस्तिस्ततदीर्घयोः ।

अर्वाडिति ङकारोऽपपाठः । यथा पूर्वत्र तिर्यगिति एवमत्रार्वागिति ॥ ६ ॥

**अभितआकाशं श्मशानम् ॥ ७ ॥**

अभितः परित आकाशं यस्य एवंविधं श्मशानं भवति । मध्ये छदिरादिभिरनाकाशमित्युक्तं भवति ॥ ७ ॥

बहुलौषधिकम् ॥ ८ ॥

बहुला ओषधयो यत्र एवं च तत् ॥ ८ ॥

कण्टकिक्षीरिणस्त्विति यथोक्तं पुरस्तात् ॥ ९ ॥

वास्तुपरीक्षायां तथात्रापि कार्यम् ॥ ९ ॥

यत्र सर्वत आपः प्रध्वंसेरन्नेतदादहनस्य लक्षणं श्मशानस्य ॥ १० ॥

यत्र प्रदेशे सर्वत आपः प्रध्वंसेरन् नावतिष्ठेरन् एतदादहनस्य श्मशानस्य लक्षणम्। यत्रासावादह्यते तदादहनम्। आदहनस्येति विशेषणादन्यदपि श्मशानमस्तीति गम्यते यत्र संचितान्यस्थीनि निधीयन्ते तदेवंलक्षणं न भवति। तत्राप्यभित आकाशमिति भवति श्मशानस्य तत्राविशेषितत्वात् ॥ १० ॥

केशश्मश्रुलोमनखानीत्युक्तं पुरस्तात् ॥ ११ ॥

'केशश्मश्रुलोमनखानि वापयीरन्नि'त्यादि 'अवच्छेदमस्य पुत्रा अमाकुर्वीरन्नि'त्यन्तं यत् पुरस्तादुक्तं तदिहापि द्रष्टव्यम् ॥ ११ ॥

द्विगुल्फं बर्हिराज्यं च ॥ १२ ॥

द्विगुल्फं प्रभूतं तत् तदुपद्विगुल्फयेयुः। सौम्यं वा द्विगुल्फमिति ॥ १२ ॥

दधन्यत्र सर्पिरानयन्त्येतत् पित्र्यं पृषदाज्यम् ॥ १३ ॥

---

१. 'तत्रश' ख. क. पाठः. २. 'अभित आकाशमित्येतत् ■ तत्रा- रि भ' घ. पाठः. ३. 'र्त भ' ख. पाठः. ४. 'वा गु' क. पाठः. ५. 'तिवत् ॥' ग. क. पाठः.

अत्र कर्मणि दधनि सर्पिरानयन्ति । एतत् सर्पिर्मिश्रं दधि पित्र्यं पृषदाज्यम् । संज्ञेयम् । तेन 'निष्पुरीषमेके कृत्वा पृषदाज्यस्य पूरयन्ती'त्यत्रापि ग्रहणं भवति ॥ १३ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
चतुर्थाध्याये प्रथमः खण्डः ।

---

अथ द्वितीयः खण्डः ।

**अथैतां दिशमग्नीन् नयन्ति ॥ १ ॥**

यस्यां दिशि भूमिभागः खानितः तां दिशमग्नीन् नयन्ति ॥ १ ॥

**यज्ञपात्राणि च ॥ २ ॥**

नयन्तीत्येव ॥ २ ॥

**अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः ॥ ३ ॥**

नयन्तीत्येव । अन्वञ्चं पात्राणां पृष्ठतः अयुजः अयुग्मसंख्यास्त्रयः पञ्चेत्यादि । अमिथुनाः स्त्रियः पुमांस एव वा न मिश्रिताः । प्रवयसो वृद्धाः । उपदेशक्रमादेव सिद्धे अन्वञ्चमिति वचनादग्नीनां च पात्राणां च क्रमो यथारुचि स्यात् ॥

**पीठचक्रेण गोयुक्तेनेत्येके ॥ ४ ॥**

एके गोयुक्तेन पीठचक्रेण शकटविशेषेण नयन्ति । एक इति वचनादन्ये शिबिकादिना ॥ ४ ॥

**अनुस्तरणीं गामजां वैकवर्णां कृष्णामेके ॥ ५ ॥**

कल्पान्तरेष्वनुस्तरणी विकल्पिता । तदनुविधानाय

व्यवहितकल्पनया योज्यम् । यत्त्वचा प्रेतोऽनुस्तीर्यते सानुस्तरणी तां गामजां वा ॥ ५ ॥

**सव्ये बाहौ बद्ध्वानुसंस्कारयन्ति ॥ ६ ॥**

अन्येनैवं विकल्पितानुस्तरणी तत्र गामेकवर्णामसङ्कीर्णवर्णाम् अजां कृष्णाम् । अन्ये त्वेकवर्णां कृष्णामित्येकमेव विशेषणं मन्यन्ते । कृष्णामित्युक्ते कृष्णप्रायापि गृह्येत तन्निवृत्त्यर्थमेकवर्णामन्यवर्णासंयुक्तामिति ॥ ६ ॥

**अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्तशिखा ज्येष्ठप्रथमाः कनिष्ठजघन्याः ॥ ७ ॥**

अमात्याः पुत्रादयः तेऽन्वञ्चो गच्छन्ति अधोनिवीताः अधःकृतोपरिवाससः बाह्वोरधःकृतयज्ञोपवीता वा । प्रवृत्तशिखा मुक्तशिखा मुक्तकेशा वा । ज्येष्ठः प्रथमोऽग्रगामी येषां ते ज्येष्ठप्रथमाः । कनिष्ठः पृष्ठगामी येषां ते कनिष्ठजघन्याः । एवंभूता गच्छेयुः । ज्येष्ठप्रथमा इत्येतावत्युच्यमाने ज्येष्ठ एव प्रथमः स्यात् । कनिष्ठजघन्यवचनात्तु ज्येष्ठानुपूर्व्याद् गच्छेयुः ॥

**प्राप्यैतं भूमिभागं कर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेतवीतविचसर्पतात इति ॥ ८ ॥**

यः पूर्वं खानितः एतं भूमिभागं प्राप्य कर्ता पुत्रादिः उदकेन शमीशाखया तदायतनं त्रिरप्रदक्षिणं परिव्रजन् प्रोक्षति । अपेतेति मन्त्रस्यावृत्तिः ॥ ८ ॥

दक्षिणपूर्वं उद्धतान्त आहवनीयं निदधात्युत्तरपश्चिमे गार्हपत्यं दक्षिणपश्चिमे दक्षिणम् ॥ ९ ॥

स उद्धतस्य खानितस्यान्तेऽन्तिमप्रदेशे दक्षिणपूर्वे आग्नेये कोणे आहवनीयं निदधात्यग्निम् उत्तरपश्चिमे वायव्ये कोणे उद्धतान्ते गार्हपत्यमग्निं निदधाति दक्षिणपश्चिमे नैर्ऋते कोणे उद्धतान्ते दक्षिणमग्निं निदधाति ॥ ९ ॥

अथैनमन्तर्वेदि ॥ १० ॥

निदधाति कर्ता बर्हिः ॥ १० ॥

इध्मचितिं चिनोति यो जानाति ॥ ११ ॥

चेतुं, कर्तान्यो वा ॥ ११ ॥

तस्मिन् बर्हिरास्तीर्य कृष्णाजिनं चोत्तरलोम तस्मिन् प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाहवनीयमभिशिरसम् ॥ १२ ॥

तस्मिन् चयने बर्हिरास्तीर्य तस्मिन् बर्हिषि कृष्णाजिनं चोत्तरलोमास्तीर्य तस्मिन् कृष्णाजिने प्रेतं संवेशयन्त्यमात्याः । कथम्, उत्तरेण गार्हपत्यं हृत्वा आहवनीयाभिगतं शिरो यस्य तमेवंभूतं संवेशयन्ति ॥ १२ ॥

उत्तरतः पत्नीम् ॥ १३ ॥

संवेशयन्ति ॥ १३ ॥

---

१., २. 'द्धृ' क. घ. पाठ. ३. 'ध्मा' ख. पाठ.

धनुश्च क्षत्रियाय ॥ १४ ॥

क्षत्रियाय पत्नीं च धनुश्च ॥ १४ ॥

तामुत्थापयेद् देवरः पतिस्थानीयोऽन्तेवासी जरद्दासो वोदीर्ष्व नार्यभिजीवलोकमिति ॥ १५ ॥

तां पत्नीमुत्थापयेद् देवरः स च पतिस्थानीयः पतिस्थानीयः। या देवरन्याययोग्या तद्विषयमेतत्। अन्ये तु सार्वत्रिकमिच्छन्ति, पतिस्थानीयत्वं रक्षणाद्यभिप्रायमिति। अन्तेवासी शिष्यः। जीर्णो वा दासः। उदीर्ष्वेति मन्त्रेण ॥ १५ ॥

कर्ता वृपले जपेत् ॥ १६ ॥

यदा वृपल उत्थापयेत् तदा कर्ता मन्त्रं जपेत् ॥ १६ ॥

धनुर्हस्तादाददानो मृतस्येति धनुः ॥ १७ ॥

उत्थापयेद् आददीत ॥ १७ ॥

उक्तं वृपले ॥ १८ ॥

कर्ता वृपले जपेदिति ॥ १८ ॥

अधिज्यं कृत्वा सञ्चितिमचित्वा संशीर्यानुप्रहरेत् ॥ १९ ॥

धनुराततज्यं कृत्वा इध्मचितेर्यः शेषः तमचित्वैव भङ्क्त्वा तस्यामेव चितौ क्षिपेत् ॥ १९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
चतुर्थाध्याये द्वितीयः खण्डः ।

---

अथ तृतीयः खण्डः ।

**अथैतानि पात्राणि योजयेत् ॥ १ ॥**

अनन्तरमेतानि वक्ष्यमाणानि पात्राणि योजयेत् मृतस्याङ्गेषु निदध्यात् ॥ १ ॥

**दक्षिणे हस्ते जुहूम् ॥ २ ॥**

एकवचनस्याविवक्षितत्वात् पाशुकीमप्येवं चातुर्मास्यप्राशीम् । एतेनोपभृद् व्याख्याता । सर्वत्र योजयेदिति संबन्धः ॥ २ ॥

**सव्य उपभृतम् ॥ ३ ॥**

हस्त इत्येव ॥ ३ ॥

**दक्षिणे पार्श्वे स्फ्यं सव्येऽग्निहोत्रहवणीम् ॥ ४ ॥**

पार्श्वे इत्येव ॥ ४ ॥

**उरसि ध्रुवां शिरसि कपालानि दत्सु ग्राव्णः ॥५॥**

दन्तेषु ग्राव्णो योजयेत् । 'यत्किञ्चित्सोमलिप्तं द्रव्यं तेनावभृथयन्ति' इत्यभिषवग्राव्णामवभृथे विनियोगात् सोममप्यमृतविषयमेतत् ॥ ५ ॥

**नासिकयोः स्रुवौ ॥ ६ ॥**

चातुर्मास्ययाजिनस्त्रयः ॥ ६ ॥

**भित्त्वा वैकम् ॥ ७ ॥**

अथ यद्येकः स्रुवः तं भित्त्वा नासिकयोर्योजयेत् ॥ ७ ॥

१. 'प', २. 'तम् ।' ख. पाठ., 'षा' ग. पाठ. ३. 'नै' ट. पाठ.

कर्णयोः प्राशित्रहरणे भित्त्वा[1] चैकम् ॥ ८ ॥

व्यतिरिक्तविषयमेतत् ॥ ८ ॥

उदरे पात्रीं समवत्तधानं च चमसम् ॥ ९ ॥

उदरे ॥ ९ ॥

उपस्थे शम्याम् अरणी[2] ऊर्वोः उलूखलमुसले जङ्घयोः पादयोः शूर्पे ॥ १० ॥

द्विवचनं पूर्ववत्[3] । नानाबीजेषु त्रीणि ॥ ११ ॥

छित्त्वा[4] चैकम् ॥ ११ ॥

इदमपि पूर्ववत् । तदेवं यस्यां दशायां यत् पात्रमुत्पन्नं[5] विनियुक्तं तस्य धारणमारमात् कर्मणः अत्र प्रतिपत्तिः । मध्ये चेत् स्वयं प्रतिपन्नं न तस्यैतदर्थमुत्पत्तिः[6] ॥ ११ ॥

आसेचनवन्ति पृषदाज्यस्य पूरयन्ति ॥ १२ ॥

यानि बिलवन्ति पात्राणि तानि पृषदाज्येन पूरयन्ति । उक्तं पृषदाज्यम् ॥ १२ ॥

अमा पुत्रो दृषदुपले कुर्वीत ॥ १३ ॥

मृतस्य पुत्रो दृषदुपले अमाकुर्वीत स्वीकुर्वीत ॥ १३ ॥

लौहायसं च कौलालम् ॥ १४ ॥

यल्लोहायसनिर्मितं यच्च कुलालकृतं तच्चोभयं पुत्रोऽमाकुर्वीत ॥ १४ ॥

---

१. 'थे' ङ. पाठः. २. 'णिमू' ग. ग. घ. पाठः. ३. 'त् । छि' घ. पाठः. ४. 'दि' ङ. पाठः. ५. 'न्नमवि' ख. ग. ङ. पाठः. ६. 'पपवि' ङ. पाठः.

**अनुस्तरण्या वपामुत्खिद्य शिरो मुखं प्रच्छादये-दग्नेर्वर्मपरिगोभिर्व्ययस्वेति ॥ १५ ॥**

अनुस्तरणीपक्षे तस्या वपामुत्कृत्य प्रेतस्य शिरश्च मुखं च प्रच्छादयेद्‌ अग्नेर्वर्मेति मन्त्रेण ॥ १५ ॥

**वृक्कयावुद्धृत्य पाण्योरादध्यादतिद्रवसारमेयौ श्वानाविति दक्षिणे दक्षिणं सव्ये सव्यम् ॥ १६ ॥**

वृक्कयाविरयाम्रफलाकृतिमांसपिण्डौ। तावुद्धृत्य प्रेतस्य पाण्योरादध्याद्‌ दक्षिणे पाणौ दक्षिणं वृक्कयं सव्ये सव्यम् अतिद्रवेति मन्त्रेण ॥ १६ ॥

**हृदये हृदयम् ॥ १७ ॥**

प्रेतस्य हृदयेऽनुस्तरण्या हृदयमुद्धृत्यादध्यात् ॥ १७ ॥

**पिण्ड्यौ चैके ॥ १८ ॥**

एक आचार्या ओदनपिण्डावपि हृदये निदधति। पिण्डीनामानौ मांसपिण्डाविति वा ॥ १८ ॥

**वृक्कयावेचार इत्येके ॥ १९ ॥**

एक आचार्याः वृक्कयाभावे पिण्ड्यावाधातव्ये मन्यन्ते पाण्योर्हृदये वा ॥ १९ ॥

**सर्वां यथाङ्गं विनिक्षिप्य चर्मणा प्रच्छाद्य ॥ २०॥**

सर्वामनुस्तरणीं यथाङ्गम् अनुस्तरण्यास्तत्तदङ्गं प्रेतस्य तस्मिंस्तस्मिन्नङ्गे विनिक्षिप्य तस्या एव चर्मणा प्रेतं प्रच्छादयेत् ॥ २० ॥

१. 'प' ख. ङ. पाठ. २. 'ङ्गं यथदनुस्तरण्या अङ्गं तत्तत् प्रे' घ. पाठ.. ३. 'णा प्र' ङ. पाठ..

**इममग्ने चमसं मा विजिह्वर इति प्रणीताप्रणयनमनुमन्त्रयते ॥ २१ ॥**

दर्शपूर्णमासयोर्येन प्रणीताः प्रणीयन्ते तं चमसं प्रेतस्याङ्के यत्र क्वचिन्निक्षिप्यानुमन्त्रयते 'इममग्ने चमसमिति मन्त्रेण । केचित् तस्मिन्नपि कर्मणि अग्निनिधानादूर्ध्वं प्राक् चितिसंचयनात् प्रणीताः प्रणयन्ति ॥ २१ ॥

**सव्यं जान्वाच्य दक्षिणाग्नावाज्याहुतीर्जुहुयादग्नये स्वाहा कामाय स्वाहा लोकाय स्वाहानुमतये स्वाहेति ॥ २२ ॥**

आच्य निपात्य अत्र होमार्थमन्यं स्रुवमुत्पाद्य । हुत्वा तु योजने विनियोगक्रमो बाधितः स्यात् ॥ २२ ॥

**पञ्चमीमुरसि प्रेतस्यास्माद्वै त्वमजायथा अयं त्वदधिजायतामसौ स्वाहेति ॥ २३ ॥**

पञ्चमीमाहुतिं प्रेतस्योरसि जुहुयात् । अस्माद् वै त्वमिति मन्त्रेण । असावित्यस्य स्थाने प्रेतस्य नामनिर्देशः प्रथमया । पञ्चमीग्रहणात् पुरस्तात् तन्त्रमुपरिष्टात् तन्त्रं च निवर्तते ॥ २३ ॥

इति श्रीहरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ चतुर्थाध्याये तृतीयः खण्डः ।

---

१. 'तु होमयो' घ. पाठ. २. 'म' ग. पाठ.

अथ चतुर्थः खण्डः ।

प्रेप्स्यंति युगपदग्नीन् प्रज्वलयतेति ॥ १ ॥

कर्ता परिकर्मिण आह युगपदित्यादि ॥ १ ॥

आहवनीयश्चेत् पूर्वं प्राप्नुयात् स्वर्गे लोके एनं प्रापदिति विद्यात् ॥ २ ॥

तेष्वग्निषु युगपत् प्रज्वालितेषुं यद्याहवनीयः पूर्वं प्राप्नुयात् प्रेतं तत एतं प्रेतं स्वर्गलोकं प्रापदे प्राप्तवानिति विद्यात् ॥ २ ॥

रात्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः ॥ ३ ॥

असौ प्रेतः अमुत्र लोके रात्स्यति संसिद्धो भविष्यति एवमस्यामात्यजनोऽस्मिन् लोके रात्स्यतीति पुत्रो विद्यात् । एतेनोत्तरे सूत्रे व्याख्याते ॥ ३ ॥

गार्हपत्यश्चेत् पूर्वं प्राप्नुयादन्तरिक्षलोके एनं प्रापदिति विद्यात् रात्स्यत्यसावमुत्रैवमयमस्मिन्निति पुत्रः । दक्षिणाग्निश्चेत् पूर्वं प्राप्नुयान्मनुष्यलोके एनं प्रापदिति विद्यादन्नमेवासावत्स्यत्येवमयमस्मिन्निति पुत्रः ॥ ४ ॥

एवकारो भिन्नक्रमः अन्नमत्स्यत्येव "अद भक्षणे" अस्मिन् लोके पुनर्जातोऽन्नवान् भविष्यत्येवेत्यर्थः । एवमयमिति व्याख्यातम् ॥ ४ ॥

युगपत् प्राप्तौ परामृद्धिं वदन्ति ॥ ५ ॥

---

१. 'प्स्यतेति' ख. पाठः. २., ३. 'चेः' ख. घ. ङ. पाठः. ४. 'द् प्राप्नुयात् प्रा' घ. पाठ. ५., ६. 'चेः' ग. पाठ. ७. 'प्तौ तु प' ख. ग. ङ. पाठः.

यद्येनं त्रयोऽप्यग्नयो युगपत् प्राप्नुयुः तदा परा ऋद्धिर्भवतीति वदन्ति ब्रह्मवादिनः ॥ ५ ॥

तं दह्यमानमनुमन्त्रयते प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति समानम् ॥ ६ ॥

प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयामित्यारभ्य समाप्येत्यन्तं यदुक्तं तदत्र कर्तव्यमित्यर्थः ॥ ६ ॥

स एवंविदा दह्यमानः सहैव धूमेन स्वर्गलोकमेतीति विज्ञायते ॥ ७ ॥

स प्रेत एवंविदा उक्तं दहनप्रकारं यो वेत्ति तेन दह्यमानः सहैव धूमेन यदैव धूम उद्गच्छति तदैव स्वर्गलोकमेतीति ब्राह्मणं भवति ॥ ७ ॥

उत्तरपुरस्तादाहवनीयस्य जानुमात्रं गर्तं खात्वाद्भिः पूरयित्वावकाः शीपालमित्यवधापयेत् ततो ह वा एष निष्क्रम्य सहैव धूमेन स्वर्गं लोकमेतीति विज्ञायते॥

तत एवं कल्पिताद् गर्तादेप प्रेतो निष्क्रम्य । सहैवेत्यादि गतम् । हवै इत्यव्ययद्वयमयमर्थः सिद्ध इत्यर्थे ॥

इमे जीवा विमृतैराववृत्रन्निति सव्यावृतो व्रजन्त्यनवेक्षमाणाः ॥ ९ ॥

ततोऽमात्या इमे जीवा इति मन्त्रमुक्त्वा सव्येन भागेनावर्तमानाः प्रेतमनवेक्षमाणा व्रजन्ति ॥ ९ ॥

यत्रोदकमवहं भवति तत् प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रनाम गृहीत्वोत्तीर्यान्या।नि

**वासांसि परिधाय सकृदेनान्यापीड्योदग्दशानि विप-ज्यासत आनक्षत्रदर्शनादादित्यस्य वा ॥ १० ॥**

यस्मिन् प्रदेशे उदकमवहं स्थिरं भवति तटाकादि तत् प्राप्य सकृदुन्मज्ज्य तस्य प्रेतस्य गोत्रनाम गृहीत्वा गर्गगोत्राय तुभ्यमिति एकैकं जलाञ्जलिमुत्सृज्य उत्तीर्यान्यानि शुष्काणि वासांसि परिधाय एनानि गृहीतमुक्तानि वासांस्युदग्दशानि कृत्वा सकृदापीड्य विपज्ज्य सङ्घीभूयासते दिवा चेदानक्षत्रदर्शनाद् रात्रौ चेदा आदित्यस्य च दर्शनात् ॥ १० ॥

**दृश्यमाने प्रविशेयुः कनिष्ठप्रथमा ज्येष्ठजघन्याः ॥**

दृश्यमाने नक्षत्रे आदित्ये वा ग्रामं प्रविशेयुः ॥ ११ ॥

**प्राप्यासदमश्मानमग्निं गोमयमक्षतं तैलमप इत्युपस्पृशन्ति ॥ १२ ॥**

आसीदन्त्यस्याभित्यासद् गृहं तामासदं प्राप्याश्मादीन्युपस्पृशन्ति बहिरेव द्वारदेशे ॥ १२ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ चतुर्थाध्याये चतुर्थः खण्डः।

---

अथ पञ्चमः खण्डः।

**नैतस्यां रात्र्यामन्नं पचेरन् ॥ १ ॥**

रात्रिग्रहणादहोरात्रस्य ग्रहणं दिवा मरणे दिवाप्यन्नं न पचेरन्। अन्नग्रहणान्मुद्गादीनां प्रतिषेधः। अन्ये तु अदनीयमन्नं तन्न पचेरन् न किञ्चिद् भुञ्जीरन्नित्यर्थं इति वर्णयन्तः फलादिभक्षणमपि नेच्छन्ति ॥ १ ॥

---

१, २. 'वा' ग. घ. पाठः. ३ 'धं तै' ग. पाठः.

त्रिरात्रमक्षारालवणाशिनः स्युः ॥ २ ॥

अपरेद्युरारभ्य त्रिरात्रमश्नन्तोऽपि क्षारं लवणं च नाश्नीयुः ॥ २ ॥

द्वादशरात्रं वा महागुरुषु ॥ ३ ॥

माता पिता पितामहः प्रपितामहः यश्चोपनीय कृत्स्नं वेदमध्यापयति एते महागुरवः। एतेषु मृतेषु द्वादशरात्रं वा त्रिरात्रं वाक्षारालवणाशिनः स्युः। शक्त्यपेक्षो विकल्पः ॥ ३ ॥

दानाध्ययने वर्जयेरन् दशाहं सपिण्डेषु ॥ ४ ॥

"सापिण्डता तु पुरुषे सप्तमे विनिवर्तते"

इति हि सपिण्डलक्षणम्। स्मर्यते च—

"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥"

इति। नित्यानि निवर्तन्ते वैतानवर्जं शालाग्नौ चैके। अन्ये एतानि कुर्यादिति च। अन्ये तु दानाध्ययनमात्रप्रतिषेधोऽयम् आशौचं तु शास्त्रान्तरादवसेयामिति स्थिताः॥ ४ ॥

गुरौ चासपिण्डे ॥ ५ ॥

असपिण्डो गुरुर्मातुलश्वशुरादिः ॥ ५ ॥

अप्रत्तासु च स्त्रीषु त्रिरात्रम् ॥ ६ ॥

सपिण्डासु त्रिरात्रं दानादि वर्जयेत् ॥ ६ ॥

---

१. 'न्नं ना' ग. पाठः. २. 'निवर' ख. ग. ङ. पाठः.

इतरेषु ॥ ७ ॥

महागुरुव्यतिरिक्तेष्वाचार्येषु 'एकदेशमुपाध्याय' इत्यादिषु ॥ ७ ॥

ज्ञातौ चासपिण्डे ॥ ८ ॥

असपिण्डो ज्ञातिः समानोदकः । तत्र च त्रिरात्रम् ।

"समानोदकभावस्तु जन्मनाम्नोरवेदने"

इति समानोदकलक्षणम् ॥ ८ ॥

प्रत्तासु च स्त्रीष्वदन्तजाते परिजाते चैकाहं सब्रह्मचारिणि समानग्रामीये च श्रोत्रिये ॥ ९ ॥

प्रत्तासु दुहित्रादिषु अदन्तजाते दन्ता यस्य न जाताः तस्मिन् बाले परिजातो दन्तजातः तत्रापि एकाहं दानादि वर्जयेत् । उपनयनादारभ्यासमावर्तनाद् यः सह व्रतं चरितवान् एकस्मिन्नाचार्ये स सब्रह्मचारी एवंविधमपरं प्रति तस्मिन् मृते एकाहमाशौचम् । समाने एकस्मिन् ग्रामे भवः समानग्रामीयः, श्रोत्रियोऽधीतवेदः तस्मिंश्च ॥ ९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
चतुर्थोऽध्याये पञ्चमः खण्डः ।

---

अथ षष्ठः खण्डः ।

संचयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेकनक्षत्रे ॥ १ ॥

अस्थीनि सञ्चीयन्ते यस्मिन् कर्मणि तत् संचयनं कृष्णपक्षस्य दशम्या ऊर्ध्वमयुजासु विषमासु तिथिषु एका-

---

१. 'श उपा' ग. ङ. पाठः.

दशीत्रयोदशीपञ्चदशीषु एकनक्षत्रे दिवसे कर्तव्यम् । सा दशमी यद्यन्तर्दशाहे भवति तत्रैव कर्तव्यम्। अथ बहिर्दशाहात् संचयनमपि तत्रैव । अपर आह—दशमी रात्रिर्गृह्यते मृताहादारभ्य तस्या ऊर्ध्वमित्यादीति ॥ १ ॥

लक्षणे कुम्भे पुमांसम् ॥ २ ॥

लक्षणे लक्षणयुक्ते शुभे कुम्भे पुमांसं संचिन्वीरन् पुंसोऽस्थीनीत्यर्थः ॥ २ ॥

अलक्षणायां स्त्रियम् ॥ ३ ॥

अलक्षणायां कुम्भ्यां स्त्रियोऽस्थीनि संचिन्वीरन् ॥३॥

अयुजोऽमिथुनाः प्रवयसः ॥ ४ ॥

व्याख्यातम् । एते संचेतारः ॥ ४ ॥

क्षीरोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षति शीतिके शीतिकावतीति ॥ ५ ॥

क्षीरमिश्रेणोदकेन ॥ ५ ॥

अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थ्यसंह्लादयन्तोऽवदध्युः ॥ ६ ॥

संह्लादः शब्दः, यदि ग्रावाणः संह्लादेरन्निति दर्शनात् । उपकनिष्ठिकानामिका । अङ्गुष्ठोपकनिष्ठिकाभ्यामङ्गुलीभ्याम् एकैकमस्थ्यादाय असंह्लादयन्तोऽस्थ्नां परस्परसङ्घट्टनेन शब्दो यथा न स्यात् तथा कुर्वन्तः कुम्भेऽवदध्युः ॥ ६ ॥

पादौ पूर्वं शिर उत्तरम् ॥ ७ ॥

तत्र पादास्थीनि पूर्वमवदध्युः । ततोऽङ्गान्तराणि क्रमेणाशिरसः । चरमं शिरःकपालम् ॥ ७ ॥

सुसंचितं संचित्य पवनेन संपूय यत्र सर्वत आ-पो नाभिष्यन्देरन् अन्या वर्षाभ्यस्तत्र कर्तेऽवदध्युरुप-सर्प मातरं भूमिमेतामिति ॥ ८ ॥

अस्थि सुसंचितं यथा तथा संचित्य पवनेन शूर्पादिजन्येन संपूय भस्मपांसूंश्च संशोध्य सूक्ष्माण्यप्यस्थीनि संचित्य तं कुम्भं यत्र वर्षाभवाभ्योऽन्या आपो नाभिष्यन्देरन् तादृशे कर्तेऽवदध्युरुपसर्पेत्यृचा ॥ ८ ॥

उत्तरया पांसूनवकीर्य अवकीर्ण उत्तरामुक्त्वे स्तभ्नामीति कपालेनापिधायाथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य श्राद्धमस्मै दद्युः ॥ ९ ॥

उत्तरया उच्छ्वञ्चस्वेति पांसूनभितोऽवकीर्य उच्छ्वञ्चमानेति जपति तत उत्ते स्तभ्नामीति कपालेनापिधाय कुम्भमुपर्यपि पांसूनवकिरति। केचित्तु पूर्वमपिधाय अपित्वा पांसूनवकिरन्ति। प्रत्याव्रज्य श्मशानाद् अप उपस्पृश्य स्नात्वा श्राद्धमस्मै प्रेताय दद्युः। सर्वमेतत् कर्ता करोति। अमात्यानामनुसन्धानमात्रकमिदम्। श्राद्धमेकोद्दिष्टं तच्चोत्तरत्र वक्ष्यते। नवश्राद्धमासिकादीनि श्राद्धान्तराणि स्मृतिभ्योऽवगन्तव्यानि ॥ ९ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ चतुर्थाध्याये षष्ठः खण्डः।

---

१. 'आपो' ख. घ. पाठः. २. 'उच्छ्वञ्चस्व पां' घ. पाठः.

अथ सप्तमः खण्डः ।

**गुरुणाभिमृता अन्यतो वापक्षीयमाणा अमावास्यायां शान्तिकर्म कुर्वीरन् ॥ १ ॥**

येषु जीवत्सु गुरुर्म्रियते ते गुरुणाभिमृताः । यथा सूर्योदये स्वपन् सूर्याभ्युदित इत्युच्यते तथा । गुरुः कुलश्रेष्ठः पित्रादिर्वा । अन्येषां वा पित्रादीनां बहूनामुपर्युपरि मरणेनापक्षीयमाणा अमावास्यायां शान्तिकर्म वक्ष्यमाणं कुर्वीरन् अमात्याः। तत्रैको ज्येष्ठः पुत्रादिः कर्ता । अपरेऽनुसन्धातारः ॥

**पुरोदयादग्निं सहभस्मानं सहायतनं दक्षिणा हरेयुः क्रव्यादमग्निं प्रहिणोमि दूरमित्यर्धर्चेन ॥ २ ॥**

प्रागुदयादग्निं भस्मना सहितमायतनेन सहितं दक्षिणस्यां दिशि हरेयुः क्रव्यादमित्यर्धर्चेन । गृहोपकरणभूतानां मणिकादीनां पुराणानामुत्सर्गः नवानां चोत्पत्तिरनन्तरं वक्ष्यते । तत्साहचर्याद् गृहोपकरणभूतस्य पचनाग्नेरयमुत्सर्गः न गृह्यस्य नापि श्रौतानाम् ॥ २ ॥

**तं चतुष्पथे न्युप्य यत्र वा त्रिः प्रसव्यमायतनं परियन्ति सव्यैः पाणिभिः सव्यानूरूनाघ्नानाः ॥ ३ ॥**

यत्र वा चतुष्पथादन्यत्रापि यत्र कुत्रापि वा दक्षिणस्यामेव दिशि ॥ ३ ॥

---

१. 'साय' ख. ग. ङ. पाठः. २. 'स्यां प' ङ. पाठः. ३. 'प्र-विद् वा' ख. पाठः. ४. 'स्यां दि' ख. घ. पाठः.

**अथानवेक्षं प्रत्याव्रज्याप उपस्पृश्य केशश्मश्रुलोमनखानि वापयित्वोपकल्पयेरन् ॥ ४ ॥**

अथ परीत्यानन्तरं पृष्ठतोऽनवेक्षमाणास्ततः स्थानात् प्रत्याव्रजन्ति । ततः अप उपस्पृश्य स्नात्वा केशादीनि वापयित्वा पुनः शौचार्थं स्नात्वा वक्ष्यमाणानि द्रव्याण्युपकल्पयेरन् ॥ ४ ॥

**नवान् मणिकान् कुम्भानाचमनांश्च शमीसुमनसो मालिनः शमीमयमिध्मं शमीमय्यावरणी परिधींश्चानडुहं गोमयं यावन्तो युवतयस्तावन्ति कुशपिञ्जूलानि ॥ ५ ॥**

मणिक उक्तः । कुम्भः प्रसिद्धः । येनाचम्यते स आचमनः करकः । उपलक्षणं चेदं मणिकादिग्रहणं यच्चान्यदेवम् (उप)युक्तं मृन्मयं तस्य सर्वस्य पुराणस्योत्सर्गः नवस्य चोपादानम् । शमीसुमनसः शमीवृक्षस्य पुष्पाणि स्त्रीलिङ्गः सुमनश्शब्दः तत्र सौत्रो लिङ्गव्यत्ययः । मालिनः मालीकृताः शमीसुमनसः । उपकल्पयेरन्निति सर्वत्र संबध्यते । परिधींश्च शमीमयान् । अत्र नवनीतमप्युपकल्पनीयम् उपरिष्टादुपयोगदर्शनात् । येषां चोपयोगो न वक्ष्यते तेषामपि यथायथमु-

१. 'णाः प्रत्याव्रज्य प्रत्यागत्योपस्पृश्य स्नात्वा केशश्मश्रुलोमनखानि वापयित्वा स्नात्वा च', २. 'नवान् मणिकान् अनुपयुक्तान् ये' क. पाठः. ३. 'णि मालिनः मालीकृ . व्यत्यय. उ' ख. ग., 'णि मालिनः मालीकृताः शमीमयमिध्मम् अरणी च शमीमय्यौ व्यत्ययः उ' ङ. पाठः. ४. 'सो च' क. पाठः

प्रयोगः कल्प्यः । तद्यथा शमीसुमनसां धारणम् । यावत्यश्च ज्ञातिभूता युवतयस्तावन्ति कुशपिञ्जूलान्युपकल्पयेरन् ॥ ५ ॥

अग्निवेलायामग्निं जनयेदिहैवायमितरो जातवेदा इत्यर्धर्चेन ॥ ६ ॥

सायं प्रणयनकालोऽग्निवेला । तस्यां शमीमयीभ्यामरणीभ्यामग्निं जनयेद् इहैवेत्यर्धर्चेन ॥ ६ ॥

तं दीपयमाना आसत आ शान्तरात्रादायुष्मतां कथाः कीर्तयन्तो मङ्गल्यानीतिहासपुराणानीत्याख्यापयमानाः ॥ ७ ॥

तमग्निं गृहाद् बहिः कचित् संस्कृते देशे काष्ठैरिन्धानाः दीर्घायुषां कथाः कीर्तयन्तो मङ्गलनिमित्तानि चेतिहासपुराणानि परस्परमाख्यापयमाना आ शान्तरात्रादासते शाम्यन्ति शब्दा यत्र तच्छान्तम् अकर्मकत्वादधिकरणे क्तः रात्रेः शान्तो भागः शान्तरात्रः मध्यरा(त्रे?त्रः) आ तस्मादासते ॥ ७ ॥

उपरतेषु शब्देषु गृहं निवेशनं वा संप्रविष्टेष्वेतस्मिन् काले दक्षिणाद् द्वारपक्षात् प्रक्रम्याविच्छिन्नामुदकधारां हरेत् तन्तुं तन्वन्रजसो भानुमन्विहीत्योत्तरस्मात् ॥ ८ ॥

अथ सर्वतः शब्देषु उपरतेषु गृहं निवेशनं वा संप्रविष्टेषु, केषु, शब्देष्वेव । निवेशने शयनस्थानम् । तिस्र एतां

१. 'तैभ्यः । तं' पः पाठः. २. 'णं ज्ञातिभूताः ॥' ख. ग., 'णं युवतयो ज्ञातिभूताः ॥' घ. पाठः. ३. 'का' ग. ङ. पाठः.

दशाः न कापि शब्दः गृहे निवेशने वा शब्द इति। एतस्मिन् काले कर्ता गृहमागत्य तस्य दक्षिणाद् द्वारपक्षादारभ्याविच्छिन्नामुदकधारां हरेत् तन्तुं तन्वन्निति मन्त्रेण आ उत्तरस्माद् द्वारपक्षात् ॥ ८ ॥

अथाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नमात्यानारोहयेदारोहतायुर्जरसं वृणाना इति ॥ ९ ॥

अथ तमग्निं कर्ता कर्माङ्गमुपसमाधाय पश्चादस्यानडुहं चर्म प्राग्ग्रीवमुत्तरलोमास्तृणाति। आस्तीर्य तस्मिन्नारोहयेत् कर्तारोहतायुरिति मन्त्रेण। मन्त्रोच्चारणमेव व्यापारः नान्यः कश्चित् ॥ ९ ॥

इमं जीवेभ्यः परिधिं दधामीति परिदध्यान्मध्यमम् ॥ १० ॥

अथ परिधिपरिधानकाले इमं जीवेभ्य इति मन्त्रेण मध्यमं परिधिं परिदध्यात् तूष्णीं दक्षिणोत्तरौ ॥ १० ॥

अन्तर्मृत्युं दधतां पर्वतेनेत्यश्मानमुत्तरतोऽग्नेः कृत्वा परं मृत्यो अनुपरेहि पन्थामिति चतसृभिः प्रत्यृचं हुत्वा यथाहान्यनुपूर्वं भवन्तीत्यमात्यानीक्षेत ॥ ११ ॥

अन्तर्मृत्युमिति पादेनाश्मानमुत्तरतोऽग्नेः स्थापयति। स्थापयित्वा परं मृत्यो अन्विति चतसृभिः प्रत्यृचं जुहोत्या-[3]

१. 'वा इ' घ. पाठः. २. 'धचे आरोपणे मन्त्रो', ३. 'ति होम अज्ये' ख. ग. ङ. पाठः.

ज्येन । प्रत्यृचमिति स्वाहाकारानिवृत्त्यर्थम्[1] तेन ऋगन्ते होमः । हुत्वामात्यानीक्षेत यथाहान्यन्विति मन्त्रेण ॥ ११ ॥

**युवतयः पृथक् पाणिभ्यां दर्भतरुणकैर्नवनीतेना-ङ्गुष्ठोपकनिष्ठिकाभ्यामक्षिणी अञ्ज्य पराच्यो निसृजेयुः॥**

अथ युवतयः पृथक् पाणिभ्याम् अक्षिणी अञ्जीरन्[2] दक्षिणेन दक्षिणं सव्येन सव्यम् । कथं, दर्भतरुणकैर्नवनीतेन अङ्गुष्ठोपकनिष्ठिकाभ्यामङ्गुलीभ्याम् । अत्र केचित् पृथक्पाणिभ्यामिति वचनाद् युगपदक्ष्णोरञ्जनमिच्छन्ति । तेषां यावत्यो युवतयः तावन्ति कुशपिञ्जूलानीति नोपपद्यते द्विस्तावन्ति प्राप्नुवन्ति । तस्मात् पृथक्पाणिवचनं दक्षिणाङ्गकारितानिवृत्त्यर्थं, तेन पूर्वं दक्षिणेन पाणिना दक्षिणमङ्क्त्वा तेनैव कुशपिञ्जूलेन सव्येन सव्यम् । एवमक्षिणी अञ्ज्य सौत्रो ल्यबादेशः अङ्क्त्वा पराच्यः पराङ्मुख्यः निसृजेयुः तत्स्थानान्निर्गच्छेयुः । अपर आह — पराच्यः प्राङ्मुख्यो भूत्वा अनवेक्षमाणास्तानि कुशपिञ्जूलान्यतिसृजेयुरिति ॥ १२ ॥

**इमा नारीरविधवाः सुपत्नीरित्यञ्जाना[3] ईक्षेत[4] ॥१३॥**

कर्ता[5] इमा नारीरिति मन्त्रेण ॥ १३[6] ॥

---

१. 'र्थम् । ऋगन्तेन होमः ॥' ख. ग. ङ. पाठः. २. 'आ' ग. पाठः. ३. 'गृंहीते' ङ. पाठः. ४. 'त ग. ङ. पाठः. ५. 'त्वा', ६. 'त ॥ अ' ख. ग. ङ. पाठः.

अश्मन्वतीरीयते संरभध्वमित्यश्मानं कर्ता प्रथमोऽभिमृशेत् ॥ १४ ॥

अथ ये उत्तरतः स्थापितोऽश्मा तं कर्ता प्रथममभिमृशेद् अश्मन्वतीरिति मन्त्रेण । पश्चादमात्या मन्त्रविदो मन्त्रेण, तूष्णीमितरे ॥ १४ ॥

अथापराजितायां दिश्यवस्थायाग्निनानडुहा गोमयेनाविच्छिन्नया चोदकधारयापो हि ष्ठा मयोभुव इति तृचेन परीमेगामनेषतेति परिक्रामत्सु जपेत् ॥ १५ ॥

एतावत् कर्म गृहाद् बहिर्भवति । अथ गृहं प्रवेष्टुममात्याः परिक्रामन्ति । अग्निना सह अग्निमादायेत्यर्थः । अनडुहा गोमयेनाविच्छिन्नया चोदकधारया । अविच्छिन्नामुदकधारां युवतयः स्रावयन्ति । आपो हीति तृचममात्या जपन्ति । एवं तेषु परिक्रामत्सु अपराजितायां दिश्यवस्थाय परीमेगामित्येतामृचं कर्ता जपेत् ॥ १५ ॥

पिङ्गलोऽनड्वानव्रणः स्यादित्युदाहरन्ति ॥ १६ ॥

येनानडुहा परिक्रामन्ति स एवंगुणः स्यादिति ब्राह्मणमुदाहरन्ति ॥ १६ ॥

अथोपविशन्ति यत्राभिरंस्यमाना भवन्त्यहतेन वाससा प्रच्छाद्यास्वपन्त ओदयात् ॥ १७ ॥

अथ गृहं प्रविश्य तमग्निं शुचौ महानसे चुल्ल्यां प्रतिष्ठापयति एष पचनाग्निः । अत ऊर्ध्वं ततो यत्र देशे अभिरंस्य

१. 'तृ। उ' ख. ग. पाठः. २. 'थ. स उ' घ. पाठः. ३. 'पश्चा' ख. ग. छ. पाठः.

माना भवन्ति स्वे स्वे शयनस्थान इत्यर्थः, तत्रोपविशन्तो-दयादहतेन वाससा प्रच्छाद्यास्वपन्तः ॥ १७ ॥

उदिते सौर्याणि[1] स्वस्त्ययनानि च जपित्वान्नं सं-स्कृत्यापनः शोशुचदघमिति प्रत्यृचं हुत्वा ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयीत गौः कंसो[2]ऽहतं वासश्च दक्षिणा ॥ १८ ॥

ते जपन्ति ये मन्त्रविदः। अन्नसंस्कारस्तस्मिन्नग्नौ होमः। कर्तुर्भेङ्गन्तेन होमः। प्रत्यृचवचनाच्च स्वाहाकारेण। तेनान्नेन ब्राह्मणभोजनम्। तैर्भुक्तवद्भिः स्वस्त्ययनं वाचयेत्। तेभ्यश्च गवादयो दक्षिणाः। अथामात्यानां भोजनम्। पूर्वे-ष्वुपवासः। पाकश्च तस्मिन् गृहे[3] न स्यात्॥ १८ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
चतुर्थाध्याये सप्तमः खण्डः।

अथाष्टमः खण्डः।

अथातः पार्वणश्राद्धे काम्य आभ्युदयिक एको-द्दिष्टे वा ॥ १ ॥

अथशब्दोऽधिकारार्थः। अतःशब्दो हेतौ। यस्माच्छ्राद्धा-यत्तो गृहस्थस्याभ्युदयः, तस्मात्। श्राद्धे विधिर्वक्ष्यते। वाशब्दः समुच्चये। पक्षसन्धिः पर्व तद्योगात् कृत्स्नमहरुच्यते। अवि-शेषाभिधानेऽपि अमावास्यैव गृह्यते शाखान्तरवशात्। तत्र गौतमः—'अथ श्राद्धममावास्यायामि'ति। तत्र कर्तव्यं पार्व-

१. 'नि ज', २. 'कां' ख. घ. पाठः. ३. 'हे' ख. पाठ.

णम् । एतन्नित्यम् । एतदेवापरपक्षस्य तिथ्यन्तरेषु क्रियमाणं काम्यम् । अत्रापस्तम्बः —'प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायत' इत्यादि । अभ्युदया विवाहादयः, तेषु कर्तव्यमाभ्युदयिकं तत्र । यच्चापरेद्युर्देवेज्या भवति तत्र पूर्वेद्युः कर्तव्यम् । 'तस्मात् पूर्वेद्युः पितृभ्यः क्रियते उत्तरमहर्देवान् यजन्ति' इति श्रुतेः । प्रेतमेकमुद्दिश्य यद् दीयते तदेकोद्दिष्टम् एक उद्दिष्टोऽत्रेति कृत्वा । तस्य कालो याज्ञवल्क्येनोक्तः—

"मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥"

इति । प्रथमे वत्सरे प्रतिमासं मृततिथावेकोद्दिष्टं कर्तव्यम् । यच्चाद्ये मासे तदेकादशेऽहन्युत्कृष्यते, न मृतेऽहनि कर्तव्यम् । ततः संवत्सरे सपिण्डीकरणं द्वादशे मासे मृततिथौ । तत्र च प्रेतस्यैकोद्दिष्टं, पित्रादिभ्यः पार्वणम् । तत्र च मासे तदेव मासिकम् । प्रथमे संवत्सरे सांवत्सरिकमपि तदेव । द्वितीयादिषु संवत्सरान्ते मृततिथावेकोद्दिष्टम् । एवमेतानि त्रयोदशैकोद्दिष्टानि । त्रिपक्षे पूर्णे अपरम् । षट्सु मासेषु पूर्णेष्वपरं मासिकस्य पूर्वेद्युरपरेद्युर्वा । अन्तर्दशाहे चापरम् ।

"चतुर्थे पञ्चमे चैव नवमैकादशेऽहनि ।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥"

इति पठन्ति । वर्णानुपूर्व्याच्चत्वार्येतानि श्राद्धानि न प्रत्येकं समुच्चितानि नवत्वविरोधात् । प्रथमं हि क्रियमाणमभिनवम् । तदेवमेतानि षोडशैकोद्दिष्टश्राद्धानि । पठन्ति च —

१. 'मे च मा', २. 'षु संवत्सरेषु सं' ख. ग. ङ. पाठ..

"नवत्रिपक्षषाण्मास्यसांवत्सरिकमासिकैः ।
श्राद्धैः षोडशभिः प्रेतः पिशाचत्वं विमुञ्चति ॥
यस्यैतानि न कुर्वन्ति एकोद्दिष्टानि षोडश ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥"

इति । एतेषु पार्वणादिषु चतुर्षु श्राद्धेषु विधिर्वक्ष्यते ॥ १ ॥

ब्राह्मणान् श्रुतशीलवृत्तसंपन्नानेकेन वा काले ज्ञापितान् स्नातान् कृतपच्छौचानाचान्तानुदङ्मुखान् पूर्वं विश्वेभ्यो देवेभ्यः पितृवदुपवेश्यैकैकमेकैकस्य द्वौ द्वौ त्रींस्त्रीन् वा वृद्धौ फलभूयस्त्वं न त्वेवैकं सर्वेषां काममनाद्ये पिण्डैर्व्याख्यातमपः प्रदाय दर्भान् द्विगुणभुग्नानासनं प्रदायापः प्रदाय तैजसाश्ममयमृन्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वपः प्रदाय शंनो देवी-रभिष्टय इत्यनुमन्त्रितासु[3] तिलानावपति तिलोऽसि सो-मदेवत्यो गोसवे देवनिर्मितः प्रत्नवद्भिः प्रत्तः स्वधया पितॄन् (इमान्) लोकान् प्रीणयाहि नः (स्वाहेति ? स्व-धेति) ॥ २ ॥

ब्राह्मणानिति श्रुतादिसंपन्नयोः क्षत्रियवैश्ययोर्ग्रहणं मा भूत् । श्रुतं विद्या शीलमन्तःकरणशुद्धिः वृत्तमाचारः तै-स्त्रिभिरपि संपन्नान् समुदितान् । एकेन वा, समस्तमपि संपन्नानित्यपेक्ष्यते यदि श्रुतादयः सर्वे न लभ्यन्ते तेषा-मेकेनापि गुणेन संपन्नानिति । काले ज्ञापितान् पूर्वेद्युर्नि-मन्त्रितान्,

---

१. ' ', २. 'सु', ३. 'न्त्य ता' क. पाठः. ४. 'वा (उतप?) स' घ., 'वा(यु?) स' ख. ग. पाठः.

"निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः।
निर्मन्त्रितैश्च तैर्भाव्यं मनोवाक्कायसंयतैः ॥"

इति याज्ञवल्क्यवचनात्। तच्च श्वः श्राद्धं भविता तत्रभवता आहवनीयार्थे प्रसादः कर्तव्य इत्येवंरूपम्। "तत्र पितरो देवताः ब्राह्मणास्त्वाहवनीयार्थे" इत्यापस्तम्बवचनात्। स्नातान्। यद्यपि 'प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्ये'त्यत्र स्नानमुक्तं तथापि तस्यानित्यत्वेज्ञापनार्थं पुनः स्नातानित्युक्तं कर्माङ्गत्यावश्यं स्नातव्यमिति। कृतपच्छौचान् 'आर्द्रपादस्तु भुञ्जीत' इति वचनात् प्राप्तमपि पादशौचं पुनर्विधीयते। कथं, कर्तैव ब्राह्मणानां पादौ प्रक्षालयेदिति आत्मना कृतपच्छौचानिति। आचान्तान् 'भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेदि'ति स्मार्तौचमनव्यतिरेकेण कर्माङ्गं तृतीयं विधीयते। उदङ्मुखान् पित्र्यर्थी उदङ्मुखाः। विश्वेदेवार्थौ प्राङ्मुखौ द्वौ।

"द्वौ दैवे प्राक् त्रयः पित्र्य उदङ्केकमेव वा"

इति याज्ञवल्क्यः। एवंभूतान् ब्राह्मणान् पितृवत् पितृभिस्तुल्यान् मन्यमानः यादृशी पित्रादिषु वृत्तिः तां वृत्तिमास्थायोपवेशयेत्। अपर आह—पितृवदिति वयः परिगृह्यते पितुर्वृद्धान् पितामहस्य वृद्धतरान् प्रपितामहस्य वृद्धतमानिति। उपवेशयंश्च पूर्वं विश्वेभ्यो देवेभ्य उपवेशयेत् प्राङ्मुखौ। कस्य

१. 'वच्छुचीन्।' ङ. पाठः. २. 'तैश्चापि सयतैर्भा', ३. 'कर्मभिः ॥' ग. ङ. पाठः.

पुनः कति ब्राह्मणा इत्यत आह—एकैकमित्यादि। तत्राभ्युदयिके एकोद्दिष्टे च नियम उक्तः—"युग्मान् वृद्धिपूर्तेष्वयुग्मानितरेष्वि"ति। त्रिभ्य ऊर्ध्वमपि वृद्धौ फलभूयस्त्वम्। न त्वेवैकं सर्वेषां न तु सर्वत्रापामर्थायैकं भोजयेदिति। काममनाद्ये आद्यं सपिण्डीकरणं तत्र हि प्रथमतस्त्रयाणां पिण्डनिपरणं क्रियते, तद् वर्जयित्वा द्वितीयादिषु काममेकैकं भोजयेत्। अपर आह—आद्यते यस्मिन् श्राद्धे तदाद्यं ततोऽन्यदनाद्यम् आमश्राद्धं तत्र काममेकमपि नियुञ्जीतेति। अथवा आद्यमदनीयं न विद्यते यत्र तदनाद्यं दुर्भिक्षं तत्रैकमपि भोजयेदिति। पिण्डैर्व्याख्यातं पिण्डनिपरणे ये कल्पा "न जीवेभ्यो निपृणीयादि"त्यारभ्योक्ताः त इहापि भवन्ति, पिण्डैर्ब्राह्मणभोजनं व्याख्यातमिति। अपः प्रदाय उपवेशनानन्तरं ब्राह्मणानां हस्तेष्वपः प्रदाय। दर्भान् द्विगुणभुग्नानासनं प्रयच्छति दक्षिणाग्रान्, विश्वेदेवार्थे प्रागग्रान् उदगग्रान् वा अभुग्नान् तेषूपवेशयाति। अस्मिन्नवसरे द्वितीयं निमन्त्रणं विश्वेदेवार्थे क्षणः कर्तव्यः पित्रर्थं इत्यादि। ओं तथेति प्रतिवचनम्। प्राप्नोतु भवानित्यासनेपूपवेशनम्। प्राप्नवानीत्युपविशति। एष आचारः। अपः प्रदाय उपविष्टानां हस्तेषु पुनरपः प्रयच्छति। ततस्तैजसादिषु त्रिषु पात्रेषु पित्रादीनां त्रयाणां यथासंख्यमर्घ्याणि कल्पयति। तैजसे राजतादौ पितुः, अश्ममये पितामहस्य, मृन्मये प्रपितामहस्य। त्रिष्वित्युच्यते विश्वेदेवार्थमपि पात्रमर्घ्योपकल्पनं च मा भूदिति। आचारस्तु

१. 'त्याह', २. 'स्त्वम्। न तु' ख. ग. क. पाठः. ३., ४. 'षु' ङ. पाठः.

तदर्थमप्यर्घ्योपकल्पनं भवति । त्रिग्रहणं तु उत्तरार्थम् । एकद्रव्येष्वित्यत्रापि एष्वेव तैजसादिषु त्रिष्वेकद्रव्यं यथा स्याद् येनकेनचिद् द्रव्येणैकद्रव्यं मा भूदिति । तेषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वप आसिच्य ता अनुमन्त्रयते शं नो देवीरिति मन्त्रेण । एवमनुमन्त्रितास्वप्सु तिलानावपति तिलोऽसीति मन्त्रेण । अनुमन्त्रणं तु शक्यत्वाद् युगपत् । तिलावपनं पृथक् । आभ्युदयिके श्राद्धे यवैस्तिलार्थः । तत्र यवोऽसीत्यूहः ॥ २ ॥

प्रसव्येनेतरपाण्यङ्गुष्ठान्तरेणोपवीतत्वाद् दक्षिणेन वा सव्योपगृहीतेन पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमित्यप्पूर्वम् ॥ ३ ॥

अर्घ्यं दद्यादिति शेषः । सव्यं प्रतिगतं प्रसव्यं तेन प्रकारेण दद्यात् । एवञ्च सर्वेषां पश्चात् पित्रर्था ब्राह्मणा उपवेशयितव्याः, पुरस्तात् प्रपितामहार्थाः, मध्ये पितामहार्थ इत्युक्तं भवति । एवंहि प्रसव्येनार्घ्यं दत्तं भवति । केन पाणिना देयम् इतरपाण्यङ्गुष्ठान्तरेण 'दक्षिणं प्रतीयादनादेशे' इति परिभाषा, अनन्तरं च वक्ष्यति दक्षिणेन वा सव्योपगृहीतेनेति । एवं बुद्धिसन्निहितं दक्षिणमपेक्ष्येतरः पाणिः सव्यः अङ्गुष्ठान्तरम् अङ्गुष्ठतर्जन्योरन्तरालं पितृतीर्थेनेत्युक्तं भवति । कस्मात् पुनः सव्येन दानं चोद्यते, तत्र हेतुः—उपवीतत्वात् । पित्र्येऽस्मिन् कर्मणि प्राचीनावीतं भवति । प्राची

१. 'ति तु' स. ग., 'तीति दक्षिण' ङ. पाठ २. 'र्थम्' स. ग. पाठः

नावीते सव्यः पाणिरुपवीतो भवति यथोपवीते दक्षिणः। ततश्च सव्यस्योपवीतत्वात् तेन दद्यादिति। दक्षिणेन (वा) पाणिना सव्योपगृहीतेन दद्यात्। एवं हि दक्षिणाङ्ककारिता चापरित्यक्ता भवति। उपवीतत्वं चानुगृहीतं भवति सव्योपग्रहणात्। पितरिदं तेऽर्घ्यमित्यादयो मन्त्राः। अप्पूर्वमिति क्रियाविशेषणं, शुद्धा अपः पूर्वं दत्त्वा पश्चादर्घ्यं दद्यादित्यर्थः। पात्रत्रित्वोपदेशादिह च मन्त्रानुपदेशाच्च विश्वेभ्यो देवेभ्योऽर्घ्यदानं नास्तीति केचित्॥ ३॥

ताः प्रतिग्राहयिष्यन् सकृत् सकृन्निवेदयेत् स्वधार्घ्या इति॥ ४॥

ता अर्घ्यभूता अपः प्रतिग्राहयिष्यन् सकृत् सकृन्निवेदयेत् स्वधार्घ्या इति। यदि पित्रर्था बहवस्तेभ्यः सर्वेभ्यः सकृत्। एवं पितामहार्थेभ्यः एवं प्रपितामहार्थेभ्यः। सकृदिति किम्। प्रतिपुरुषं मन्त्रावृत्तिर्मा भूत्। वीप्सावचनं प्रतिवर्गं मन्त्रावृत्त्यर्थम्। यत्र यत्र पुनरेवंविधो यत्नो नास्ति। तत्र तत्र प्रतिब्राह्मणमावृत्तिः, यथा अर्घ्यप्रदानमन्त्रस्य॥ ४॥

प्रसृष्टास्वनुमन्त्रयेत या दिव्या आपः पृथिवी संबभूवुः या अन्तरिक्ष्या उत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योना भवन्त्विति॥ ५॥

प्रसृष्टासु दत्तासु अर्घ्यासु ता एता अनुमन्त्रयेत या

---

१. 'यति स्व' घ. पाठः.

दिव्या इति मन्त्रेण । केचित् सर्वान्तेऽनुमन्त्रणमिच्छन्ति । अन्ये प्रतिपुरुषम् ॥ ५ ॥

संस्रवान् समवनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति ॥ ६ ॥

अर्घ्यदानावशिष्टा आपः संस्रवाः । तान् प्रथमे पात्रे समवनीय ताभिरद्भिः पुत्रकामश्चेन्मुखमनक्ति ॥ ६ ॥

प्रथमपात्रे विशेषप्रदर्शनार्थे यज्ञगाथे उदाहरति—

नोद्धरेत् प्रथमं पात्रं पितृणामर्घ्यपातितम् ।
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥
यदा वा तूद्धृतं पात्रं विवृतं वा यदा भवेत् ।
अभोज्यं तद् भवेच्छ्राद्धं क्रुद्धैः पितृगणैर्गतैः ॥ ७ ॥

प्रथमं पात्रं यस्मिन् प्रदेशे पितृणामर्घ्याय पातितं निहितं तस्माद् देशान्नोद्धरेत् । यत आवृतास्तत्र पात्रे तिष्ठन्ति पितरः । क एवमाह— शौनकोऽब्रवीत् । आवृता इति वचनात् संस्रवान् समवनीय तत्पात्रं पिधातव्यं पात्रान्तरेण । उद्धरणे विवरणे च पितृगणाः क्रुद्धा गच्छेयुः । ततश्च तैर्गतैस्तच्छ्राद्धमभोज्य भवेत् ते तत्र न भुञ्जीरन् ॥ ७॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
चतुर्थाध्याये अष्टम खण्ड ।

---

१ ,, २. 'दि' घ-पाठ ·

अथ नवमः खण्डः ।

**एतस्मिन् काले गन्धमाल्यधूपदीपाञ्जनाच्छादनानां प्रदानम् ॥ १ ॥**

अर्घ्यदानानन्तरं गन्धादीनि ददाति ॥ १ ॥

**उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा ॥ २ ॥**

अथ स्थालीपाकादन्नमुद्धृत्य घृताक्तं कृत्वा ब्राह्मणाननुज्ञापयति अग्नौ करिष्ये इत्यादीनामन्यतमेन वाक्येन । अग्नावित्यस्य चोत्तराभ्यामपि सम्बन्धः अग्नौ करवै अग्नौ करवाणीति ॥ २ ॥

**प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति ॥ ३ ॥**

अथ ब्राह्मणानां प्रत्यभ्यनुज्ञा क्रियतामित्यादिभिर्यथासंख्यम् ॥ ३ ॥

**अथाग्नौ जुहोति यथोक्तं पुरस्तात् ॥ ४ ॥**

अथानुज्ञानन्तरमग्नौ जुहोति यथोक्तं पिण्डपितृयज्ञे सोमाय पितृमत इत्यादि ॥ ४ ॥

**अनभ्यनुज्ञायां पाणिष्वेव ॥ ५ ॥**

यत्राभ्यनुज्ञा नास्ति तस्मिन् विषये ब्राह्मणानां पाणिष्वेव जुहुयात् ताभ्यामेव मन्त्राभ्याम् । क्वचाभ्यनुज्ञा नास्ति यत्रानुज्ञापनं नास्ति तत्र । क्व च तन्नास्ति यत्राग्नौ होमो नास्ति तत्र, अग्नौ करिष्य इत्येवंरूपत्वादनुज्ञापनस्य । क्वचाग्नौ होमो नास्ति आहिताग्नेः पार्वणे । तस्य पिण्ड-

पितृयज्ञे दक्षिणाग्नौ होमः कृतः पिण्डाश्च निवृत्ताः, केवलं ब्राह्मणभोजनमेव शिष्यते तत्र पाणिष्वेव होम इति। अपर आह — यस्य गृह्योऽग्निर्नास्ति तस्य विधुरादेरयमुपदेश इति ॥ ५॥

अथ पाणिहोमं स्तोतुं ब्राह्मणमनुकर्षति —

**अग्निमुखा वै देवाः पाणिमुखाः[1] पितर इति हि ब्राह्मणम् ॥ ६ ॥**

तत्र पाणिहोमपक्षे विशेषमाह —

**यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशति ॥ ७ ॥**

यदि पाणिषु होमः तदा ब्राह्मणेष्वाचान्तेषु पाणिषु हुतमन्नं भुक्तवत्सु अन्यदन्नमनुदिशति पात्रे कदलीपत्रादौ ॥ ७ ॥

अग्निपक्षे विशेषमाह —

**अथाग्नौ हुतशेषमन्नमन्ने ॥ ८ ॥**

अथाग्नौ होमः ततो भोजनार्थादन्नादुद्धृत्य तस्मिन्नन्ने हुतशेषमन्नं दद्यात् ॥ ८ ॥

**सृष्टं दत्तमार्ध्नुकमिति ॥ ९ ॥**

सृष्टं प्रभूतं दत्तम् आर्ध्नुकम् ऋद्धिनिमित्तं कर्तुरिति विज्ञायते । तस्मात् प्रभूतं देयमिति । अपर आह — सृष्टमिति क्रियाविशेषणं सर्ग उत्साहः सृष्टमुत्साहवद् यथा तथा दत्तं श्रद्धया दत्तम् आर्ध्नुकमिति ॥ ९ ॥

---

१. 'खा वै पि' प. पाठ.

**तृप्तान् ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च ॥ १० ॥**

भुञ्जाना ब्राह्मणा यदा तृप्ता भवन्ति तदा तांस्तृप्तान् ज्ञात्वा मधुशब्दवतीर्मधु वाता ऋतायते इत्येता ऋचः श्रावयेद् ब्रूयाद् अक्षन्नमीमदन्तेत्येनां च ॥ १० ॥

**सम्पन्नं पृष्ट्वा यद्यदन्नमुपभुक्तं ततस्ततः स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदयेत् ॥ ११ ॥**

अथ सम्पन्नमिति ब्राह्मणान् पृच्छति । ते च सुसंपन्नमिति प्रतिब्रूयु. । ततो यद्यदन्नमुपभुक्तं ब्राह्मणैरुपभुक्तशिष्टमित्यर्थः, ततस्ततः स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषमन्नं ब्राह्मणेभ्यो निवेदयेत् । अस्मादेवानुवादाद् गम्यते अस्ति स्थालीपाको होमार्थ इति ॥ ११ ॥

**अभिमतेऽनुमते वा भुक्तवत्स्वनाचान्तेषु पिण्डान् निदध्यात् ॥ १२ ॥**

निवेदिते सति ब्राह्मणास्तदन्नमभिमन्यन्ते आत्मसात् कुर्वन्ति अस्मभ्यमेव देहीति अनुमन्यन्ते वा इष्टैः सहोपभुज्यतामिति । एवं तैरभिमतेऽनुमते वा भुक्तवत्सु तेष्वनाचान्तेषु पिण्डान् निदध्यात् निपृणीयात् पिण्डपितृयज्ञकल्पेन ॥ १२ ॥

**आचान्तेष्वेके ॥ १३ ॥**

एके आचार्या आचान्तेषु पिण्डान् निपृणन्ति ॥१३॥

**प्रकीर्यान्नमुपवीयो स्वधोच्यतामिति विसृजेदस्तु स्वधेति वा ॥ १४ ॥**

निधाय पिण्डानन्नं भूमौ प्रकिरन्ति । तत्र मन्त्रमपि पठन्ति "ये अग्निदग्धा ये अनग्निदग्धा ये वा जाताः कुले मम ।

भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्" इति। एवम् अन्नं प्रकीर्य उपवीय उपवीतं कृत्वा । अस्मादेव वचनादेतावन्तं कालं प्राचीनावीतीति विज्ञायते । उक्तं च— 'प्रसव्येनेतरपाण्यङ्गुष्ठान्तरेणोपवीतत्वादि'ति । ततो यथाशक्ति दक्षिणां दत्त्वा सामात्यः प्रदक्षिणीकृत्य ओं स्वधोच्यतामिति उक्त्वा विसृजेत् । अस्तु स्वधेति वा प्रत्युक्त्वा गच्छेयुः एकोद्दिष्टे शास्त्रान्तरोक्तो विशेषः—

"एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं त्वपसव्यवत् ॥"

इति । अन्ये तु — दक्षिणत उष्णं भस्म निरुह्य प्रेतायामुष्मै यमाय च स्वाहेति होममिच्छन्ति । अमुष्मा इत्यस्य च स्थाने प्रेतस्य नामनिर्देशश्चतुर्थ्या । शेषमत्र यथोक्तं तथा कर्तव्यम् । सपिण्डीकरणे प्रेतस्यैकोद्दिष्टकल्पनं पित्रादीनां पार्वणकल्पनम् । अर्घ्यप्रदानान्ते प्रेतपात्रं पितृपात्रेषु सेचयेद् ये समाना इति द्वाभ्याम् । अन्ये प्रपितामहपात्रमितरपात्रेषु सेचयन्ति । एवं पिण्डेषु निपृतेषु प्रेतपिण्डं त्रिधा कृत्वा इतरेषु निदधाति ताभ्यामेव मन्त्राभ्याम् । अन्ये प्रपितामहपिण्डमितरेषु निदधाति ॥ १४ ॥

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
चतुर्थाध्याये नवम खण्ड ।

---

१. 'स' ग पाठ-

अथ दशमः खण्डः ।

**अथ शूलगवः ॥ १ ॥**

अथशब्दोऽधिकारार्थः । शूलगवो नाम रुद्रयज्ञो वक्ष्यते । शूलाङ्कितो गौः शूलगवः । तद्योगात् कर्मणि वृत्तिः ॥

**शरदि वसन्ते वा ॥ २ ॥**

एतयोर्ऋत्वोरन्यतरस्मिन् इदं कर्म भवति ॥ २ ॥

**आर्द्रया ॥ ३ ॥**

'नक्षत्रे च लुपी'त्यधिकरणे तृतीया । आर्द्रायां कर्तव्यम् ॥ ३ ॥

**श्रेष्ठं स्वस्य यूथस्य ॥ ४ ॥**

सजातानां मध्ये यः श्रेष्ठः तम् । द्वितीयान्तानामभिषिञ्चतीति वक्ष्यमाणेन सम्बन्धः । शूलगव इत्युपसमस्तोऽपि गौः सम्बध्यते विशेष्यत्वेन । पुंलिङ्गनिर्देशाच्च पुंगवस्य ग्रहणम् ॥ ४ ॥

**अकुष्ठिपृषत् ॥ ५ ॥**

यो वर्णतः पृषद् भवति अकुष्ठी च तम् । सौत्रो लिङ्गव्यत्ययः द्वितीयाया वा लुक् ॥ ५ ॥

**कल्माषमित्येके ॥ ६ ॥**

एक आचार्याः कल्माषं चित्रवर्णमिच्छन्ति । अपर आह[२] — पृषन्ति बिन्दवः, यः कुष्ठी पृषद्भिः कल्माषश्च न भवति तम् । यूथश्रेष्ठो (न?) भवतु मा वा भूदिति ॥ ६ ॥

---

१. 'यः न द्वि' ग. ङ. पाठः. २. 'वि यू' ख. ग. घ., 'तु मा' ख. पाठः.

**कामं कृष्णमारोहवांश्चेत् ॥ ७ ॥**

काममित्यभ्युपगतौ । कृष्णमपि कामं कुर्याद्, आरोहः ककुत् शरीरोच्छ्रायो वा तद्वांश्चेत् ॥ ७ ॥

**व्रीहियवमतीभिरद्भिरभिषिञ्चति शिरस्तोऽध्याभसदः ॥ ८ ॥**

तमेवंभूतं पुङ्गवं शिरस्तोऽधि शिरस्त आरभ्य आभसदः भसदिति पुच्छप्रदेशाभिधानं गुह्याभिधानमित्यन्ये आ तस्मादभिषिञ्चति ॥ ८ ॥

**रुद्राय महादेवाय जुष्टो वर्धस्वेति ॥ ९ ॥**

एष मन्त्रः । ततस्तं शूलेनाङ्कयित्वोत्सृजति यावत् (सं?) पन्नदद् भवति । अन्ये तु रुद्रायेत्यादिनोत्सृजन्ति तूष्णीमभिषिञ्चन्ति । उत्सृजेदित्यनुक्तमपि गम्यते उत्तरत्र दर्शनात् 'इष्ट्वान्यमुत्सृजति नानुत्सृष्टः स्यादि'ति ॥ ९ ॥

**तं पन्नदतं वृषीभूतं वा यज्ञियस्यां दिश्यसन्दर्शने ग्रामादूर्ध्वमर्धरात्रादुदित इत्येके वैवं चरित्रवन्तं ब्राह्मणमुपवेश्य सपलाशामार्द्रशाखां यूपं निखाय व्रतत्यौ कुशरज्जू वा रशने अन्यतरया यूपं परिवीयान्यतरयार्धशिरसि पशुं बद्ध्वा यूपे रशनायां वा नियुनक्ति यस्मै नमस्तस्मै त्वा जुष्टं नियुनज्मीति ॥ १० ॥**

तं शूलगव पन्नदतं पन्नाः पतिता दन्ता यस्य तम् । "यदा वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवती"ति ब्राह्मणम् ।

---

१ 'वा नि' ग. पाठ.

"योऽपन्नदन्मलं तत्पश्नामिति विज्ञायते" इत्यापस्तम्बः। वृषीभूतं सेचनसमर्थम् एवंभूतं वा यज्ञियस्यां दिशि यज्ञार्हायाम् आविन्दितस्यामितिवच्छान्दसः स्याडागमः। ग्रामाद् बहिर्यत्र स्थिता ग्रामं न पश्यन्ति ग्रामे वा स्थित्वा यं न पश्यन्ति तस्मिन्नसन्दर्शने देशे ऊर्ध्वमर्धरात्रादस्मिन् काले। उदित इत्येके एक आचार्या उदित इत्याहुः। तदा वैद्यं चरित्रवन्तं य एतां विद्यामधीते यश्चैतत् कर्मानुष्ठितवान् तमेवं ब्राह्मणमुपवेश्य आज्यभागान्ते शामित्रायतनाद्यग्नि हुतमित्येतदन्तं कृत्वा सपलाशां सपर्णाम् आर्द्रां चासौ-शाखा च तामार्द्रशाखां यूप्यस्य पलाशादेः सम्बन्धिनीं यूपं निखाय द्वे व्रतत्यौ लते पशुबन्धनक्षमे कुशनिर्मिते वा रज्जू रशने करोति। तयोरन्यतरया यूपं परिव्ययति। अन्यतरया अर्धशिरसि शिरस एकस्मिन् पार्श्वे पशुं बद्ध्वा यूपे रशनायां वा तं पशुं नियुनक्ति यस्मै नम इति मन्त्रेण। रुद्रदेवत्योऽयं पशुः। तथाच रुद्राय जुष्टो वर्धस्वे'ति उत्सर्जनमन्त्रः। हराय कृपायेत्यादिभिश्च द्वादशभिर्देवनामभिर्होमः। तस्मादयमपि मन्त्रस्तद्देवत्य`[१] एव। लक्षणतश्चैतद्देवत्यत्वम्। इदं हि देवस्य लक्षणं यस्मै नम इति। तथाच शिंशुमारब्राह्मणे श्रूयते—"यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तराहनुर्यज्ञो धरे"त्यादि। अत्र हि देवतान्तराणां स्वशब्देनोक्तत्वाद् यस्मै नम इति देवस्यैव लक्षणतो निर्देशः॥ १०॥

प्रोक्षणादि समानं पशुना॥ ११॥

१. 'न्त स' इ. पाठ

पशुकल्पोक्तं प्रोक्षणादिपदार्थजातमविकृतं कर्तव्यम्॥

विशेषान् वक्ष्यामः ॥ १२ ॥

अत्र ये तु विशेषास्तान् वक्ष्यामः ॥ १२ ॥

पात्र्या पलाशेन वा वपां जुहुयादिति विज्ञायते ॥ १३ ॥

पात्र्या मृन्मय्या पलाशेन पर्णेन वा यज्ञीयस्य वृक्षस्य वपां जुहुयादिति ब्राह्मणं भवति ॥ १३ ॥

हराय कृपाय शर्वाय शिवाय भवाय महादेवायोग्राय पशुपतये रुद्राय शङ्करायेशानायाशनये स्वाहेति ॥ १४ ॥

हरायेत्यादिभिः स्वाहाकारान्तो द्वादशभिर्देवनामभिर्युक्त एको मन्त्रः वपाया अवदानानां स्थालीपाकस्य च भवति ॥ १४ ॥

षड्भिर्वोत्तरैः ॥ १५ ॥

अस्मिन्नेव वा पाठे उत्तरैः षड्भिरुग्रायेत्यादिभिर्जुहुयात् ॥ १५ ॥

रुद्राय स्वाहेति वा ॥ १६ ॥

अयं वा होममन्त्रः ॥ १६ ॥

चतसृषु चतसृषु कुशसूनासु चतसृषु दिक्षु बलिं हरेद्यास्ते रुद्र! पूर्वस्यां दिशि सेनास्ताभ्य एतं नमस्ते अस्तु मा मा हिंसीरिति ॥ १७ ॥

प्रधानहोमानन्तरं स्विष्टकृतः प्राक् चतसृषु दिक्षु चतसृषु चतसृषु कुशसूनासु। वीप्सावचनात् प्रतिदिशं चतस्रः। कुशसूनाः कुशानां पुष्पमय्यः तासु बलिं हरेत्। तत्र पूर्वस्यां दिशि मन्त्रः— यास्ते रुद्र। पूर्वस्यां दिशीति। एवं सर्वासु दिक्षु बलिं हरेदित्यनुषङ्गः॥ १७॥

प्रतिदिशं त्वादेशनम्॥ १८॥

तस्यास्तस्या दिशो नाम त्वादेष्टव्यम्। यास्ते रुद्र! दक्षिणस्यां दिशि प्रतीच्यां दिशि उदीच्यां दिशि इति॥ १८॥

चतुर्भिः सूक्तैश्चतस्रो दिश उपतिष्ठेत कद्रुद्राय इमा रुद्राय आ ते पितः इमा रुद्राय स्थिरधन्वन इति॥ १९॥

हृत्वा बलिं कद्रुद्रायेत्यादिभिश्चतुर्भिः सूक्तैश्चतस्रो दिश उपतिष्ठेत। यथासंख्यमित्येके। प्रतिदिशं चतुर्भिरिति वयं चतुर्भिरिति वचनात् सूक्तग्रहणात्। चत्वार्येव हि निर्दिष्टानि सूक्तानि च तानि सूक्तं सूक्तादौ हीने पाद इति वचनात् (?)। तस्माच्चतुर्भिः सूक्तैः प्रतिदिशमुपस्थानं कर्तव्यम्॥ १९॥

सर्वरुद्रयज्ञेषु दिशामुपस्थानम्॥ २०॥

अन्येष्वपि सर्वरुद्रयज्ञेषु आश्वयुजीकर्मादिष्वेतद् दिशामुपस्थानं कर्तव्यम्॥ २०॥

तुषान् फलीकरणांश्च पुच्छं चर्म शिरः पादावग्नावनुप्रहरेत्॥ २१॥

स्थालीपाके ये तुषाः ये च फलीकरणाः ये च पशोः पुच्छादयः तत्सर्वमग्नावनुप्रहरेत् ॥ २१ ॥

भोगं चर्मणा कुर्वीतेति शाम्बव्यः ॥ २२ ॥

शाम्बव्यस्त्वाचार्यो मन्यते भोगं चर्मणा कुर्वीतेति चर्मणोऽनुभवे न दोष इति ॥ २२ ॥

उत्तरतोऽग्नेर्दर्भवीतासु कुशसूनासु वा शोणितं निनयेच्छ्वासिनीघोषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽनेन वः प्रीणानीति ॥ २३ ॥

अथाग्नेरुत्तरतः दर्भवीता दर्भराजयः कुशसूनाः कुशपुष्पमय्यो वास्तीर्णा भवन्ति तासु पशोः शोणितं निनयेत् श्वासिनीरित्यादिना मन्त्रेण ॥ २३ ॥

अथोदङ्ङावृत्य श्वासिनीघोषिणीर्विचिन्वतीः समश्नुतीः सर्पा एतद्वोऽत्र तद्धरध्वमिति सर्पेभ्यो यत् तत्रासृगूवध्यं वावच्युतितं भवति ॥ २४ ॥

अथ यस्मिन् देशे पशुर्विशसितः तं प्रत्युदङ्मुख आवृत्य श्वासिनीघोषिणीरित्यादिमन्त्रेण यत्तत्र देशे असृग् रक्तम् ऊवध्यमान्त्रं वा अवच्युतितं क्षरितं भवति । सापेक्षत्वान्मन्त्रलिङ्गाच्च सर्पेभ्यो निवेदयतीति गम्यते ॥ २४ ॥

तद्धरन्ते सर्पाः ॥ २५ ॥

तदेव निवेदितं सर्पा हरन्ते ॥ २५ ॥

अथ देवस्य वैभवमुच्यते —

सर्वाणि ह वा अस्य नामधेयानि सर्वाः सेनाः सर्वाण्युच्छ्रयणानि ॥ २६ ॥

यावत् किञ्चिन्नामसंयुक्तं तत्सर्वमस्य देवस्य शेषभू

तम्। यावत्यश्च सेनास्ता अप्यस्यैव। सर्वप्रकाराणि चोच्छ्रयणानि उच्छ्रयाः ऐश्वर्याणि तान्यप्यस्यैव ॥ २६ ॥

**एवंविद् यजमानं प्रीणाति नास्य ब्रुवाणं चन हिनस्तीति विज्ञायते ॥ २७ ॥**

य एवं देवं विदित्वा याजयति स यजमानं प्रीणाति बलेन योजयति। यश्चास्यैवंविदो यजमानस्य ब्रुवाण उपदेष्टा भवति तमपि देवो न हिनस्तीति ब्राह्मणम्। चनशब्दोऽप्यर्थे। एवं याजयितुर्यजमानस्य च कर्माङ्गं ज्ञानमुपदिष्टम् ॥ २७ ॥

**नास्य प्राश्नीयुर्नास्य ग्राममाहरेयुरनभिमानुको हैष देवः प्रजा भवति ॥ २८ ॥**

अस्य पशोः द्वितीयार्थे षष्ठी अस्य वा संबन्धि किञ्चिदपि न प्राश्नीयुः (ना)स्य संबन्धि किञ्चिदनुपयुक्तमपि ग्राममाहरेयुः। कस्माद्, अनभिमानुको हैष देवः प्रजा भवति। अभिपूर्वो मन्यतिर्हिंसाकर्मा छान्दस उक(न्? ञ्)। 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इत्युकान्तयोगे षष्ठीप्रतिषेधाद् द्वितीया। प्रजानामहिंसको भवति। इतरथा हिंस्यादित्युक्तं भवति ॥ २८ ॥

**अमात्यानन्ततः प्रतिषेधयेत् ॥ २९ ॥**

अमात्यान् पुत्रादीन् बालान् अस्य कर्मणोऽन्ततः समीपे प्रतिषेधयेत् यथा समीपे नागच्छेयुः तथा कुर्यात् ॥

१. 'ते ॥ एव', २. 'त्वा यो या' ङ. पाठ. ३. 'द्रष्टा' ग. ङ. पाठः. ४. 'ण भवति।च' ख. ङ. पाठ. ५. 'तीति ॥' ङ. पाठः.

**नियोगात् तु प्राश्नीयात् स्वस्त्ययन इति ॥ ३० ॥**

यस्त्वेतस्मिन् कर्मणि नियुज्यते स प्राश्नीयादेव यस्मादस्यासौ स्वस्त्ययनः स्वस्तिप्राप्तेः साधनभूतः ॥ ३० ॥

अथास्य कर्मणः प्रशंसा —

**स एष शूलगवो धन्यो लोक्यः पुण्यः पशव्य आयुष्यो यशस्यः ॥ ३१ ॥**

धन्यः धनप्राप्तेर्निमित्तभूतः । धान्य इति च पठन्ति तदा धान्यप्राप्तेर्निमित्तभूतः । एवमुत्तरत्रापि सर्वत्र । तस्य निमित्त इत्यधिकारे 'गोद्व्यचो —' इति यत्प्रत्ययं संयोगोत्पातव्यतिरेकेणापि निमित्तमात्रे प्रयुञ्जते ॥ ३१ ॥

यस्मादेवं प्रशस्तः शूलगवः, तस्मात् —

**इष्टान्यमुत्सृजेन्नानुत्सृष्टः स्यात् ॥ ३२ ॥**

सर्वथा सकृदुत्स्रष्टव्य इत्युक्तं भवति ॥ ३२ ॥

**न ह्यपशुर्भवतीति विज्ञायते ॥ ३३ ॥**

एवमेतत् कर्म कुर्वन् अपशुर्न ह भवति पशुमानेव भवतीति ब्राह्मणं भवति ॥ ३३ ॥

**शन्तातीयं जपन् गृहानियात् ॥ ३४ ॥**

समाप्ते कर्मणि गृहानागच्छन् शन्तातीयं शं न इन्द्राग्नी इति सूक्तं जपन् आगच्छेत् ॥ ३४ ॥

**पशूनामुपताप एतमेव देवं मध्ये गोष्ठस्य यजेत ॥**

१. 'त्रीयः प' ख. ग. पाठः. २. 'न् नापशुर्भव' घ. पाठः. ३. 'पेदाग' क. पाठः.

पशूनां गवादीनामुपतापे रोगे उत्पन्ने एतमेव देवं रुद्रं गोष्ठस्य मध्ये यजेत ॥ ३५ ॥

**स्थालीपाकं सर्वहुतम् ॥ ३६ ॥**

जुहुयादिति शेषः । शूलगवस्य स्थाने स्थालीपाकः स च सर्वहुतो भवति । मन्त्रश्च पूर्वोक्त एव ॥ ३६ ॥

**बर्हिराज्यं चानुप्रहृत्य धूमतो गाव आनयेत् ॥**

बर्हिरादीन्युपयुक्तानि अग्नावनुप्रहृत्य यतो धूमस्ततो गाव आनयेत् । द्वितीयार्थे प्रथमा, गा आनयेत् यथैना धूमः प्राप्नुयात् ॥ ३७ ॥

ततः—

**शन्तातीयं जपन् पशूनां मध्यमियान्मध्यमियात् ॥ ३८ ॥**

पशूनां मध्यं प्रविशेत् । द्विरुक्तिरध्यायपरिसमाप्तिकृता ॥ ३८ ॥

**नमः शौनकाय नमः शौनकाय ॥ ३९ ॥**

इति हरदत्ताचार्यमिश्रविरचितायामाश्वलायनगृह्यवृत्तौ
अनाविलाया चतुर्थाध्याये दशमः खण्डः ।
चतुर्थोऽध्यायः समाप्तः ।

---

येन प्रणीतमृषिणा सूत्रं स्वाचार्यसंमतम् ।
तमाश्वलायनं वन्दे विधानचाः शिलोच्चयम् ॥
समाप्तोऽयं ग्रन्थः ।

---

शुभं भूयात् ॥[1]

---

1. 'शुभम्' ख. ग. ङ. पाठः.

=